श्रेष्ठि देवचन्द्र लालभाई जैन पुस्तकोद्धारे ग्रन्थाङ्कः ७१

सहस्रावधान-प्रधान-युगोत्तम-श्रीमुनिसुन्दरसूरिविनेय
श्रीरत्नशेखरसूरि विरचितः

# आचारप्रदीपः।

---

मुद्रणकारिका—श्रेष्ठि देवचन्द्र लालभाई जैन पुस्तकोद्धार संस्था ।

प्रसिद्धिकारकः—जीवनचन्द्र-साकरचन्द्रः-अस्याः कार्यवाहकः ।

इदं पुस्तकं राजनगरे सूर्यप्रकाश यन्त्रालये मूळचंदभाई त्रीकमलाल द्वारा मुद्रयित्वा प्रकाशितम् ।

वीर संवत् २४५३ विक्रमसंवत् १९८३ सन १९२७

प्रति १००० वेतनं रु० १-८-० Rs. 1-8-0



# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

| | |
|---|---|
| जन्म १९०९ वैक्रमाब्दे<br>कार्तिकशुक्लैकादश्यां, सूर्यपूरे. | निर्याणम् १९६२ वैक्रमाब्दे<br>पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |

## The Late Sheth Devchand Lalbhai Javeri.

**Born 1853 A. D. Surat, Died 13th January 1906 A. D. Bombay.**

9-24.-Copies 5000.

# श्रीआचारप्रदीपस्योपोद्घातः

गृहनामाश्रयात्मनि स्वयं दर्या यथार्थाभिधानोऽयमाचारप्रदीपाभिधानो ग्रन्थः सुहृदयसहृदयैः, रचनाऽस्य आचारपंचकस्य ज्ञानदर्शनचारित्रतपोवीर्याचाररूपस्य विषयं सनिरूपणं सकथानकं ज्ञापयितुं श्रीमद्भिः सूरिपुङ्गवै रत्नशेखराभिधैः षोडशशताब्द्यां वैक्रमीयायां कृतेति निर्णीयते, यतः प्रशस्तौ स्वयमेवाहुः—

" एषां श्रीसुगुरूणां प्रसादतः षट्कुतिथिमिते (१५१६) वर्षे ।
जग्रन्थ ग्रन्थमिमं सुगमं श्रीरत्नशेखरः सूरिः ॥ १२ ॥ "

सूरिपुङ्गवाश्चैते ये मारिनिवारणप्रवणशान्तिकरस्तोत्रसूत्रयितारः नामसहस्रधारकाः श्रीमुनिसुन्दरसूरिवरास्तेषां पट्टधराः, यत आहुः स्वयमेव प्रतिप्रकाशं प्रान्त्यभागे

"श्रीमुनिसुन्दरसूरिपट्टप्रतिष्ठितश्रीरत्नशेखरसूरिविरचिते" इति । एतदेवानुवादयांचक्रुर्यथार्थाभिधानाः तपोगच्छार्णववेलाधरणवेलन्धराः श्रीमन्तो धर्मसागराः पट्टावल्यां, स्पष्टीचक्रुश्च श्रीमतां जन्मकालाद्यपि तत्रैव, यतस्त आहुः—

श्रीमुनिसुन्दरसूरिपट्टे चतुष्पञ्चाशत्तमः श्रीरत्नशेखरसूरिः विक्रमसंवत् १४५७ क्वचित् १४५२ जन्म १४६३ व्रतं १४८३ पण्डितपदं १४९३ वाचकपदं १५०२ सूरिपदं, तत्कृता ग्रन्थाः श्राद्धप्रतिक्रमणवृत्तिः श्राद्धविधिवृत्तिः आचारप्रदीपश्चेति, १५१७ पौष. व. ६ दिने स्वर्गः ”

यद्यपि श्रीमन्तः श्रीप्रभूणां मुनिसुन्दरसूरिवर्याणां पट्टे प्रतिष्ठितास्तथापि श्रीमतां प्रतिबोधका गुरवः श्रीमन्तो यतिजीतकल्पविवरीतारः साधुरत्नाः साधुधुर्याः, अध्यापकाश्च श्रीमन्तो महाऽविद्याविडम्बनक्षममहाविद्याविडम्बनवृत्तिविधातारो अन्वर्थाभिधानाः श्रीभुवनसुन्दराः, यत आहुः स्वयमेव प्रशस्तौ

"यतिजीतकल्पविवृतश्च पञ्चमाः साधुरत्नसूरिवराः ।
यैर्मादृशोऽप्यकृष्यत करप्रयोगेण भवकूपात् ॥ ६ ॥

तथा श्रीभुवनसुन्दरसूरीणां वर्णने च–

'यज्ज्ञाननिधिं मदादिशिष्या उपाजीवन् ॥ १७ ॥

तदेवं श्रीमुनिसुन्दरसूरिपट्टाधिपा श्रीसाधुरत्नसूरिवरदीक्षिताः श्रीभुवनसुन्दरसूरिभिरध्यापिताश्च श्रीमन्तो रत्नशेखरसूरयः प्रस्तुतग्रन्थसौधसूत्रणसूत्रधारा इति निश्चितं ।

विषयश्चात्र ज्ञानाद्याचारपञ्चकरूप इति प्रागभ्यधाय्यत्र, यद्यपि ज्ञानाद्याचारा न स्वमनीषोन्नीताः किंतु श्रीनिशीथभाष्यचूर्ण्योः श्रीदशवैकालिकनिर्युक्तौ तद्वृत्तौ च प्रत्नकालीनैः सूरिवर्यैर्विस्तरेण ते विषयतयोद्घाटितास्तथापि बालानां कान्तासंमितवाक्यजनितबोधानां प्रस्तुत एव ग्रन्थ उपयोगी,यतोऽत्र प्रत्याचारं प्रत्याचारभेदं च स्वरूपान्वाख्यानं विहितं तदनु यथायथं कथानकानि सर्वेष्ववान्तरभेदेषु प्रकटितानीति आचारपञ्चकमभिबुभुत्सूनामावश्यकोऽयं ग्रन्थ इति स्पष्टमेव ।

अत्र कटुरसननिपुणरसनः खरो रटति यदुत श्रीमद्भिः रत्नशेखरसूरिभिः श्रीजिनदत्तः साक्षितया ग्रन्थद्वारा धृत इति

जिनदत्तो मान्य एवाभूत् श्रीमतां, तथा सर्वैरपि तपोगच्छसंतानीयैर्मान्य एव स इति, परं तदपकर्णनीयमेव, यतो जिनदत्तः चेत् सूत्रानुगश्रद्धाकस्तर्हि श्रीमद्भिः साक्षितया न धृतोऽपि मान्य एव, अन्यथा शासनविरोधिनं कः प्रवचनानुसारी भवभीरुर्मानयेत् तं, यतः साक्षितया ग्रन्थानां धरणं न स्वसंमतानामेव, तथात्वे श्रीवीरप्रभुप्रभृतीनां वैदिकत्वाद्यापत्तेः, तैः तत्तद्ग्रन्थानां साक्षितयोल्लखनात्, प्रवचनविरोधिता च जिनबिम्बस्य स्त्रीपूजानिषेधेन मासकल्पव्युच्छेदाभिधानेन श्राद्धप्रतिमावहनोत्सादनाप्रकटनेन लौकिकलोकोत्तरमिथ्यात्वपोषकत्वेन च तत्कुलकाभिहितेन सम्यग्दृशां स्पष्टैव प्रतीता, आचार्यपदमपि तस्य जिनवल्लभस्येव प्राक्तनकालगतगुरोः प्रभुस्त्वपातिक्रम एवेति खरैरेव घुष्टमिति न कथमपि वचसाऽपि सम्यग्दृशां शंसनीयः, अतो यः कश्चिद् पुरस्कृत्यैनं ग्रन्थं तिरस्कर्त्ता शासनधुरन्धराणां स गेहेनर्दीव तिरस्कृतो बोध्यः, श्रीमतां गुरुभिरपि श्रीमद्भिर्मुनिसुन्दरसूरिवर्यैः स्त्रीपूजादिनिषेधक उक्त एवानन्तसंसारीति न शासनधुर्याणां नूत्ना प्ररूपणा, न ह्यसत्यपोषणाभिरतानां कापि सम्यग्मार्गानुसारितेति सर्वपार्षदमिति ।

यथावत् प्रस्तुतग्रन्थस्य विषयावगमस्तु विषयानुक्रमादेवावसीयते इति नात्रोद्यतितं । श्रीश्रीपालचरितगुणस्थानक्रमारोहादिसंदृब्धारः श्रीरत्नशेखराः श्रीवज्रसेनसूरिपट्टधरा इति अन्य एव ते ।

श्रीपार्श्वपादाब्जयुगेन दीप्रे ।

मरुस्थले सादरिपत्तनेऽत्र ।

स्थितश्चतुर्मासमुदाहरद् द्राक् ।
प्रस्तावनां मोदपदं बुधानाम् ॥ १ ॥

श्रीमतां रत्नत्रयीव ग्रन्थत्रयी शासनाम्बरे विजयते भुवनद्योतिनी, प्रख्यातं च श्रीमद्भिर्धर्मसागरोपाध्यायैरपि पट्टावल्यां श्राद्धप्रतिक्रमणसूत्रवृत्तिः श्राद्धविधिवृत्तिः आचारप्रदीपश्चेति ग्रन्थत्रिकं, यद्यप्यत्र प्रशस्तिलिखितसंवदपेक्षया यथोक्त एव क्रमो योग्यो, यतः श्राद्धप्रतिक्रमणवृत्तिं गणव्यवस्थायां चक्रुः श्रीप्रभवः "षडंकविश्वमिते । श्रीरत्नशेखरगणी वृत्तिमिमामकृत कृतितुष्ट्यै ॥ १० ॥" गणव्यवस्था च श्रीमतां १५०१ यावत्, श्राद्धविधिं तु "षड्खतिथिमिते वर्षे । श्राद्धविधिसूत्रवृत्तिं व्यधित श्रीरत्नशेखरः सूरिः ॥ १२ ॥" इतिवचसा सूरिपदालंकर्तृत्वे,

सूरित्वं च श्रीमतां १५०२ वैक्रमीयेऽब्दे जातमिति पट्टावल्यां स्पष्टमेवोक्तं, ततश्च सूरिपदस्थैः १५०६ वर्षे श्राद्धविधिवृत्तिः सूत्रिता, एवमेव प्रस्तुत आचारप्रदीपोऽपि सूरिपदमलङ्कुर्वाणैरेव दृब्धः, यतोऽत्र प्रशस्तौ उदाजहुः पूज्याः—

"षट्कुतिथिमिते वर्षे । जग्रन्थ ग्रन्थमिमं"

ततः पट्टावल्युक्त एव संवत्क्रमेण ग्रन्थक्रमोऽवसीयते, परं चिन्ताऽत्रैतावती आवश्यकीया यदुत-यदि उपर्युक्त एव क्रमो ग्रन्थानां त्रयाणां तर्हि कथं १४९६ संवति विहितायां श्राद्धप्रतिक्रमणवृत्तौ १५०६ वर्षे विहितायाः श्राद्धविधिवृत्तेरुल्लेखः क्रमशः ५-१८८-२०३ पत्रेषु मुद्रितपुस्तकस्य, किंच०-कथंकारमेव १५०६ वर्षविहितायां श्राद्धविधिवृत्तौ १५१६ वर्षे विहितस्य आचारप्रदीपस्य कथनातिदेशः पत्रे ८१ तमे, एवं च भविष्यति त्रिलोकनपट्टनामस्त्रास्थ्यपत्र, परं पूर्वं तावत् त्रया-

णामपि (द्वयोर्वा) विहितो विषयोल्लेखः स्यात् पश्चात्त तत्तद्ग्रन्थरचनेति संगमने सर्वमपि सुस्थं स्यात्, चिकीर्षा चात्र प्राक् तावद्ग्रन्थद्वयतयावगम्यते, यत आचारप्रश्नकरस्रूते श्राद्धप्रतिक्रमणवृत्तौ श्राद्धविधेरतिदेशः, संपूर्णता च ग्रन्थानामेतेषां प्रश्नस्युक्तसंवदनुक्रमापेक्षैव, अत एव १५०८ वर्षे उत्पन्नस्य लुम्पाकस्य निराकरणं १५१६ वर्षे विहितायां श्राद्धविधावेव श्रुकराजचरितेऽवलोक्यते नान्यत्रेति मनीषाऽस्माकं, अन्यथा वा समालोचयन्तु सुधियो वस्तुतत्त्वमनुसृत्येति शम् ॥ एतद्ग्रन्थान्त्यकाव्यगतविशेषणबाहुल्यनिरीक्षणेन श्रीमतां शिष्येण पृथक्कृतोऽयं भाग इत्यादिका कल्पनापि स्यात् परं यथायथं प्रमाणानामभावात् नैतस्मिन् निर्णयमाधातुमलमिति तं सुधियः जानन्तु चेद् ज्ञापयन्तु येनोपकृता भवामो वयमिति ॥

अर्ह

श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः-७१

सहस्रावधानप्रधानयुगोत्तमश्रीमुनिसुन्दरसूरिविनेयश्रीरत्नशेखरसूरिविरचितः

# आचारप्रदीपः

श्रीवर्द्धमानमनुपमविज्ञाननिधानमानुमामि मुदा ।
श्रीसिद्धार्थप्रभवं श्रुतवाग्विभवं गुरुगरिष्ठम् ॥ १ ॥

श्रीवीर १ सिद्धान्त २ गुरूणां ३ युगपन्नमस्कारस्त्वयर्थः ।

सम्यग्ज्ञान १ सुदर्शन २ चरण ३ तपो ४ वीर्य ५ गोचरं किञ्चित् ।
आचारपञ्चकमहं श्रुतानुसारेण विवृणोमि ॥ २ ॥

आ० प्र०
ज्ञानाचार.
॥ १ ॥

इह हि भव्यप्राणिप्रदत्तचित्ताभिमते श्रीमज्जिनमते रहस्यभूतावतारः सम्यगाचारः, स च ज्ञानदर्शनादिभेदात् पञ्चप्रकारः, यदुक्तम्—" नाणंमि दंसणंमि अ चरणंमि तवंमि तह य विरिअंमि । आयरणं आयारो इअ एसो पंचहा भणिओ ॥ १ ॥ " यद्यपि ज्ञानं मतिश्रुतावधिमनःपर्यवकेवलज्ञानभेदात् पञ्चविधं, तथाप्यत्र श्रुतज्ञानं ग्राह्यं, वक्ष्यमाणकालविनयाद्यष्टविधज्ञानाचारस्य तत्रैव सम्भवात्, श्रुतज्ञानेनैव च शेषज्ञानानि प्रकाश्यन्ते तत्प्राप्तिपूर्वकमेव च प्रायो लभ्यन्ते, श्रुतज्ञानस्य च केवलज्ञानादपि अतिशायिता दृश्यते, यदुक्तं श्रीपिण्डनिर्युक्तौ—"ओहो सुओवउत्तो सुअनाणी जइ हु गिण्हइ असुद्धं । तं केवलीवि भुंजइ अपमाण सुअं भवे इहरा ॥ १ ॥ " तथा विशेषावश्यकेऽपि—" सुअनाणं महिड्ढीअं, केवलं तयणंतरं । अप्पणो सेसगाणं च, जम्हा त पविभावगं ॥ २ ॥ " तेन श्रुतज्ञानं प्रधानीकृत्यागमेऽपि ज्ञानाचारव्यपदेशः, ततो ज्ञाने—श्रुतज्ञाने द्वादशाङ्ग्यादिरूपे, दर्शने—सम्यग्दर्शने न तु चक्षुरादौ अत्र तदनधिकारात्, चारित्रे—सर्वविरतिरूपे, श्राद्धं त्वाश्रित्य देशविरतिरूपे, तपसि—उपवासादौ, वीर्ये—धर्म्मकृत्यमाश्रित्योद्यमनरूपे, सम्यगाचरणं आचारः, एवं ज्ञानाचारदर्शनाचारचारित्राचारतपआचारवीर्याचाररूपाः पञ्चाचाराः स्युः, ते च क्रमादष्टाष्टद्वादशषट्त्रिंशद्विधा ज्ञेयाः, यदुक्तं निशीथभाष्ये—" नाणे दंसण चरणे तवे अ विरिए अ भावमायारो । अट्ठट्ठ दुवालस विरिअमहाणी उ जा तेसिं ॥ १ ॥ " अत्र चूर्णिः " नाणायारो अट्ठविहो जाव वीरिआयारो छत्तीसविहो, ते अ छत्तीस भेआ एए चेव नाणाइआ मेलिआ भवंति, अहाणीअसीदनं जं तेसिं—नाणायारादीणं स एव वीरिआयारो भवइ " ज्ञानं च भवद्वयेऽपि हितावहं, प्रायः तस्मादेव इष्टकार्यसिद्धेः, अन्यथा तद्वैपरीत्यापत्तेः, अनुभवसिद्धं चेदं सर्वेषां, यदि हि भोजनगमनाच्छादनशयनासनवचनातीतादिकथनस्नानपानगानविज्ञानदानावस्थानप्रीतिवैरस्वाजन्यपैशुन्यसेवायुद्धौषधमंत्रसाधनदेवताराधनन्यासमोचनादि विश्वासकरणराज्यव्यापारप्र-

॥

हणादौ सर्वत्र भाविनमनर्थं पूर्वं वेत्ति तदा कथं तत्र प्रवर्त्तेत ?, तेष्वेव च भोजनादिषु शङ्कितानर्थेषु यदि भाविनीं स्वेष्टसिद्धिं वेत्ति तथा कथं न प्रवर्त्तेत ?, तदाह-" अज्ञानं खलु कष्टं द्वेषादिभ्योऽपि सर्वदोषेभ्यः । अर्थं हितमहितं वा न वेत्ति येनावृतो जीवः ॥ १ ॥ अप्रयत्नः प्रदीपोऽयमादित्यो नित्यमुद्गतः । तृतीयं लोचनं ज्ञानमचौर्यहरणं धनम् ॥ २ ॥ पावाओ विणियत्ती पवत्तणा तह य कुसलपक्खंमि । विणयस्स य पडिवत्ती तिन्निवि नाणे समप्पिंति॥ ३ ॥" तत्त्वश्रद्धानरूपदर्शनाद्यपि ज्ञाने सत्येव प्राप्यते, आप्तोपदेशादिना हि यावत्तत्त्वं ज्ञातं न स्यात् तावत्कथं श्रद्धातुं शक्यं ?, यत्परमार्षम्-" नाणेण जाणई भावे, दंसणेण य सद्दहे । चरित्तेण निगिण्हाइ, तवेण परिसुज्झई ॥१॥ " अत एवादौ ज्ञानाचार उपन्यस्तः ततश्च दर्शनाचारः, दर्शनपूर्वकत्वात्प्रायश्चारित्रावाप्तेः तदनु चारित्राचारः, चारित्रं प्राप्य कर्म्मनिर्ज्जरार्थं तपस्तप्यमिति ततः तपआचारः, ज्ञानाद्याचारचतुष्के च सर्वशक्त्या यतनीयं न तु क्वापि वीर्यमपह्नवनीयमिति पञ्चमो वीर्याचारः । एवं च ज्ञानस्य परमोपकारित्वात् ज्ञानेष्वपि श्रुतज्ञानस्य मुख्यत्वेनोक्तत्वात् तदाराधनाय सर्वशक्त्या यतितव्यं, यतः-"जइविहु दिवसेण पयं धरिज्ज पक्खेण वा सिलोगद्धं । उज्जोअं मा मुंचसु जइ इच्छसि सिक्खिउं नाणं ॥ १ ॥" शास्त्रं च सर्वमपि सम्यग्दृष्टिपरिगृहीतं श्रुतज्ञानमेव, यदाहुः-" व्याकरणच्छन्दोऽलङ्कृतिनाटककाव्यतर्कगणितादि । सम्यग्दृष्टिपरिग्रहपूतं जयति श्रुतज्ञानम् ॥ १ ॥" आस्तां च शास्त्रं दूरे, श्लोकादिमात्रमपि महते गुणाय, यतः—रश्मिग्रुपं वाजिनमाशु वल्गा, कुमार्गगं मार्गयतीह यद्वत् । ज्ञानं तथा यद् द्विजमुञ्जराजयवर्षिमुख्यानयति स्म मार्गे ॥१॥" श्रुतज्ञानाराधनाच्च केवलज्ञानमपि सुलभं, तद्भवेऽपि पृथ्वीपालनृपस्येव, तत्कथा यथा—

पृथ्वीपालः पृथ्वीपालः पृथ्वीपुरे पुरेऽस्ति पुरा । न्यक्षपदार्थपरीक्षणविचक्षणस्तत्क्षणप्रतिभः ॥ १ ॥

धर्म्मादिष्टमधर्मादनिष्टमित्यादिशास्त्रवाक्यानाम् । संवादादर्शनतः तस्य न शास्त्रेषु बहुमानः ॥ २ ॥
अपि पुण्यजुपः केऽपि हि दौस्थ्याधिव्याधिदुःखिताः सततम् । प्रेक्ष्यन्ते पुण्यमुपस्त्वपरे साम्राज्यसौख्यजुपः ॥ ३ ॥
सोऽन्येद्युर्विद्यामठमशठपठं नष्टचर्ययोपगतः । पाठकपठितं श्रुतवान् श्लोकमिमं श्लोकमिव शुद्धम् ॥ ४ ॥
–'सर्वत्र सुधियः सन्तः, सर्वत्र कुधियोऽधमाः । सर्वत्र दुःखिनां दुःखं, सर्वत्र सुखिनां सुखम् ॥ ५ ॥'
तत्सूक्तार्थपरीक्षावीक्षार्थमथैप पृथुगुणैः प्रथितम् । सुपुरुपमतिपरुपतया स्वकपुरुपैः सरुपमाह्वास्त ॥ ६ ॥
त्वत्सूनुना मदान्धंभविष्णुना हस्तिनेव विध्वस्ता । दत्तैकेन मदाज्ञाऽर्गला वलात् प्रचरसमक्षम् ॥ ७ ॥
उद्घोष्य दोपमेवं कृत्रिमकोपं प्रकाशयन्नुच्चैः । चौरमिव चारके तं ससुतं प्राचिक्षिपत् क्षितिपः ॥ ८ ॥
विश्वस्तचरांश्च चरान् व्यमुचत् प्रच्छन्नतद्वचःश्रुत्यै । प्राचीकटच्च कपटाद्गाढतमग्लानिमात्मतनौ ॥ ९ ॥
राज्ञोऽथ वपुस्तादृग् यादृक् स्यादायुपोऽन्तिमे समये । यद्वा क्व जीविताशाऽप्यस्मादाकस्मिकातङ्कात् ? ॥ १० ॥
इत्यासन्नचरेभ्यः श्रुतवन्तौ प्रकृतिपरहितौ शोकम् । श्रितवन्तौ सुतवन्तौ तौ भृशमस्रूणि निर्झरवत् ॥ ११ ॥
हृद्गतकथयाऽथ मिथः कथयामासतुरिमौ महीशतनौ । हा किं जातमकस्माद् मा भूदत्याहितं किञ्चित् ॥ १२ ॥
दूनावनेन यद्यप्यावामेवं मुधैव सहसैव । अस्मिंश्च कथाशेषे सुखेन नौ स्याच्छुटिर्झटिति ॥ १३ ॥
यस्मादभिनवभूमान् मोक्ष्यति खलु वन्दिवृन्दमखिलमपि । चारकशोधनपूर्वं ह्यभिनवराज्योत्सवो भवति ॥ १४ ॥
न त्वन्यथा च्छुटिकथा कथमपि नौ दृश्यतेऽतिकुपितोऽयम् । आज्ञाभङ्गाक्षेपी को वेद कथं कदर्थयिता ? ॥ १५ ॥
उक्तं हि—" आज्ञाभङ्गो नरेन्द्राणां, महतां मानखण्डना । वृत्तिच्छेदो द्विजातीनामशस्त्रो वध उच्यते ॥ १६ ॥"

एवं सत्यपि जीवतु जगतीजीवातुरेष चिरकालम् । अन्यस्यापि विरूपं न प्रार्थ्यं किं पुनर्नृपतेः ? ॥ १७ ॥
स्वकदुष्कर्मविनिर्मितमेतद्धि न चात्र कोऽपि दोषोऽस्य । नो चेदद्यः परीक्षां विनैव दक्षः कथं कुर्यात् ? ॥ १८ ॥
तदुक्तम्—" सव्वो पुव्वकयाणं कम्माणं पावए फलविवागं । अवराहेसु गुणेसु अ निमित्तमित्तं परो होइ ॥ १९ ॥"
बलवति कर्मणि मर्मणि कुतोऽपि घातो क्वचिन्निनो लगति । न प्राणत्राणं न च नाचारश्चात्र न विचारः ॥२०॥
स्वककर्म्मनिर्मितिवशात्तदक्षाण्यं तदावयोर्भवतु । भूयादयं शुभंयुः सर्वं पर्याप्तमियतैव ॥ २१ ॥
इति वार्त्तितं तयोर्द्वागथो यथावन्न्यवीविदन् नत्वा । नष्टचराः स्पष्टगिरा नराधिपं प्रापिवांश्च मुदम् ॥ २२ ॥
तुष्टः पुष्टप्रतिभः स्फुटयन् पटुतां क्षणान्तरे स्वतनोः । बहुबहुमानप्रकटनपूर्वकमुर्वीश्वरः स्वपुरः ॥ २३ ॥
आकार्य कार्यपारम्पर्यमुदीर्यार्थयेधीश्च सत्कार्य । विससर्ज तौ प्रमुदितौ सत्प्रकृतिफलं यदः सकलम् ॥२४॥ युग्मम् ।
आद्यस्य श्लोकपदस्यार्थमिति क्षितिपतिः परीक्षितवान् । अपरस्यापि परीक्षितुमुपक्रमं सोऽक्रमं कृतवान् ॥ २६ ॥
कौचन नीचप्रकृती कृत्रिमबहुमाननस्ततः कृतवान् । मन्त्र्यादेरपि मान्यौ सन्मान्यौ जन्यजनकौ द्वौ ॥ २६ ॥
प्राग्वत्कृत्रिमतीव्रामयान प्रकाश्याथ काश्यपीपतिना । तौ श्राविनौ कदाचित् स्वस्थान्स्थानस्थितिं स्वचरैः ॥२७॥
तावथ मिथश्चकथतुः स्वप्रकृतेरुचितमनुचितप्रकृती । शृण्वत्सु चरेषु रहःसमये ह्यन्तःस्थमुद्भवति ॥ २८ ॥
नृपतिरयं सम्प्रति चेत् म्रियते क्रियते तदा मुदाऽऽवाभ्याम् । निष्पुत्रस्यास्य सुखं समग्रसाम्राज्यपरिभोगः ॥२९॥
को नानुमन्यते नौ राज्ये यो वा न मन्यते लघु तम् । हत्वा राज्यं कुर्वो राज्ञोऽभिनवस्य रीतिरियम् ॥ ३० ॥
जातु न लातुं राज्यं क्षमावहे तर्हि कुर्वहे स्वैरम् । सर्वस्वलुण्टननृपान्तःपुरपौरीपरीभोगम् ॥ ३१ ॥

तत्सत्वरमस्य वरं मरणं स्वयमेव मारणं वाऽस्तु । आवाभ्यामभ्यन्तरविहारिणा किं हि दुस्साधम् ? ॥ ३२ ॥
इत्यालापः पापव्यापमयः पापयोस्तयोः कुधियोः । श्रुत्वाऽतिदुःश्रवोऽप्यश्राव्यत नृपतेः स्पर्शगुप्तम् ॥ ३३ ॥
भूपः प्रकोपकम्पः क्षिप्रं तौ न्यग्रहीदहीननयः । दुर्जनतर्जनसज्जनपूजनमुचितं हि नृपतीनाम् ॥ ३४ ॥
प्राप्तपरीक्षः पुनरिति तृतीय पादं परीक्षितुं क्षितिपः । आजन्म दौःस्थ्यदुःस्थं वराकमाह्वद् द्रमकमेकम् ॥ ३५ ॥
भिक्षाहृतकर्परकरं कन्थाकृतिवस्त्रखण्डपरिधानम् । नष्टिकृतानष्टुम्भं स्खलत्क्रमं भृशकृशतनुम् ॥ ३६ ॥
वपुरभ्यञ्जनमर्दनमुद्वर्तनस्नानभोजनाच्छदनैः । शय्यासनादिभिरभीप्सितैः करिष्यामि सुखिनं त्वाम् ॥ ३७ ॥
मत्पार्श्वे तिष्ठ सुखं भुङ्क्ष्व च मानुष्यकं सुखं निखिलम् । त्यज भिक्षान्नरोगं भजस्व भोगं न सन्निरोधम् ॥ ३८ ॥
विधिमपि विधाय विधुरितवृत्तिं ननु शोचनां न तिष्ठस्ते । किं ना कल्पद्रुमवत् मयि प्रसन्ने हि दुष्प्राप्यम् ?॥ ३९॥
इत्याप्युक्तोऽप्युच्चैः सदैव मुक्तोऽप्यनिश्वसन् कृपणः । न जहाति निजं वेषं मिथ्यात्वमिवेह मिथ्यात्वी ॥ ४० ॥
कुट्टितवक्त्रशिरा नु मनाग् न मोचितस्ततः क्षितिपः । सोऽकरं भज भोजार्शनिजरोगं सम्पीड्याचरम् ॥ ४१ ॥
स ततः शीत इवाङ्गैः प्रेत इवागुरुत वान्तवांश्च द्राक् । आगतमात्रोऽस्तमितान् जीनः सम्पत्तत्रमिव सर्वैः ॥ ४२ ॥
यतः—"दैवमुल्लङ्घ्य यत्कार्यं, क्रियते फलवन्न तत् । सरोऽम्भश्चातकेनात्तं, गलरन्ध्रेण गच्छति ॥ ४३ ॥"
ताम्बूलाद्युपचारैः सोऽयं भूपेन भोजितः स पुनः । जठरव्यथादिकष्टं स्पष्टं प्राप्तो यथा नारकात् ॥ ४४ ॥
विहिते तु तदुपचारे महातिसारेण पीडितो स्वोत्तैः । तदनन्तरं त्वचिरात् मृत्युनिकटा विशूचिकया ॥ ४५ ॥
रक्तातिसारतीव्रज्वरपित्तकफानिलादिरोगैरेव । नृपरत्ने कृतयत्नेऽप्यसौ सुखी नैव दैवहतः ॥ ४६ ॥

॥ १ ॥

कथमप्यथ सद्गुरुणा जडधीरिव विविधदुष्करौपयिकैः । क्ष्माशक्रेणैष पट्टचक्रे नोपक्रमैः किं वा ? ॥ ४७ ॥
अथ मुदिते क्षितिदयितेऽहङ्कृतिकृतहुंकृतिः स्वकृत्यकृते । दुर्दैवप्रेषित इव विषवैद्यगृहेऽगमद् द्रमकः ॥ ४८ ॥
संयोजितविषभेकं विषमं दृग्विषयमागतं गतधीः । सोऽजेघ्रीयत शीघ्रं प्राणादपि पारवश्यमहो ॥ ४९ ॥
जिघ्रंस्तेन प्रत्याख्यातः ख्यातश्च हा कृतं किमिदम् ? । आमरणं दुःखानां करणं ह्यविमृश्यकरणं यत् ॥ ५० ॥
सम्भ्रान्तस्वान्ततयाऽभ्यधत्त भिक्षाचरोऽपि सुरभितमे । आघ्रातेऽस्मिन् किं मे निवारणैवं यथाऽनर्थे ? ॥ ५१ ॥
सोऽप्युज्जगार गौरववत्तीव्रविपाकगौरवाद्गरतः । अस्मादस्मिन् जन्मनि तवाभवत् सौख्यसंन्यासः ॥ ५२ ॥
पञ्चेन्द्रियार्थमध्ये सुखार्थमेकोऽपि न भवताऽभिमतः । सेव्यस्तत्सेवायां भविता तत्र झटिति मृतिरेव ॥ ५३ ॥
तत्प्रान्तनीरसाल्पाशनपानकजीर्णशीर्णपरिधानैः । भोगत्यागपरीषहसहनानियतैकवासाद्यैः ॥ ५४ ॥
मुनिचर्यया चरसि चेत् तदत्र जीवसि न चान्यथा नियतम् । परिणामा जीवानामिवौषधानामपि विचित्राः ॥५५॥ युग्मम् ।
श्रुत्वेति कातरमना आतुरवत्तदखिलं प्रपेदेऽसौ । मर्त्यो मृत्योर्भीत्या दुष्करमपि किं न कुरुते वा ? ॥ ५६ ॥
यतिरीत्या तिष्ठन्नपि नृपादिभिर्नोदितोऽप्यसौ यतिताम् । नादत्त तुच्छचित्तः सा हि महासात्त्विकैः साध्या ॥५७॥
प्रागुक्तसूक्ततार्त्तीयीकपदार्थं समर्थयितुमिव सः । नैवमपि प्राव्राजीत् प्रव्रज्यायां हि सुखितैव ॥ ५८ ॥
यतः—"तणसंथारनिविट्ठो मुणिपवरो भट्ठरागमयमोहो । जं पावइ मुत्तिसुहं तं कत्तो चक्कवट्टीवि ? ॥ ५९ ॥"
धर्मधिया यद्येतत् कुर्यात् को वेद किं लभेत फलम् ? । पशुकष्टं त्वेवमहो पतितमहो जीवलोकोऽयम् ॥ ६० ॥
मासतृतीयपरीक्षश्चतुर्थचरणार्थगतिपरीक्षार्थम् । नृपतिरुपायं ध्यायन् दध्यावध्यामधीरेवम् ॥ ६१ ॥

अथ गाथाः—अन्नरस कहं सुहिणो सुहा दुहं दिज्जए परिक्खत्थं । ता गंतुं परदेसं सयं परिक्खं करिस्सामि ॥ ६२ ॥
इअ मंतिअ मंतिवरे नरेसरो रज्जभारमन्नदिणे । आरोविअ एगागी नयराओ निग्गओ रत्तिं ॥ ६३ ॥
निअया इव निअयदेसे जणा असेसेऽवि महं विसेसेण । उवलक्खिऊण नूणं भत्तिं विविहं विहिस्संति ॥ ६४ ॥
ता कह लहुं गमिस्सं दूरं देसंतरं परिक्खत्थं । इअ चिंताउव्विग्गो नग्गोहतलंमि स निविट्ठो ॥ ६५ ॥
इत्तो तत्थ निवासी जक्खो पिअजक्खिणीइ अक्खित्तो । कोवि हु इमो महंतो अतिही तुम्हेहिं महणिज्जो ॥ ६६ ॥
यतः— " गेहागयाणमुचिअं वसणावडिआण तह समुद्धरणं । दुहिआण दया एसो सव्वेसिं सम्मओ धम्मो ॥ ६७ ॥ "
तो जक्खो पच्चक्खो होउं साहेइ सुअण ! साहेसु । किं तुह इट्ठं ? जह तं देमि समग्गं सुरतरुव्व ॥ ६८ ॥
अह विम्हिरो नरवरो पयंपए को तुमं च ? कह इट्ठं । देसि ? मणवंछिआणि च जेण अणंताणि मणुआणं ॥ ६९ ॥
सो आह सुरवरोऽहं मणपत्थिअअत्थसाहणसमत्थो । मणसाऽविहु अम्हाणं सव्वा सिद्धी समिद्धी अ ॥ ७० ॥
भूवो भणेइ भो किं अलिअं जंपेसि जं सुराणंपि । मणइट्ठं न हु सिज्झइ देवावि हवंति बहुदुहिआ ॥ ७१ ॥
यदाह— " ईसाविसायमयकोहमायलोभेहिं एवमाईहिं । देवावि समभिभूआ तेसिं कत्तो सुहं नाम ? ॥ ७२ ॥ "
ता जइ निअं मणिट्ठं तए न सिज्झेइ ता कह परस्स । सिज्झिस्सइ वहु ? जम्हा रंकेण ण दिज्जए रज्जं ॥ ७३ ॥
तम्हा गव्वगहिल्लो तुमं छइल्लोऽवि कहसि कहमेवं ? । सच्चगिरा चेव नरा अवि पवरा किं पुणो अमरा ? ॥ ७४ ॥
इअ तत्तजुत्तिजुत्तं निवेण वुत्तं सुणित्तु चित्तंमि । जक्खो चमक्किओ सो साहइ सच्चं इमं सव्वं ॥ ७५ ॥

देवाणवि पुव्वज्जिअनिअनिअपुण्णाणुसारओ चेव । बीआणुसारओ इव रिद्धी मणइट्ठसिद्धी य ॥ ७६ ॥
तहवि तिअसाण सत्ती अचिंतणिज्जत्ति चिंतिअं कज्जं । नरदुस्साहं साहंति ते लहुं किंचि किंचि सुहं ॥ ७७ ॥
ता तं किंचिवि मग्गसु सिज्झिस्सइ जं मए अवस्सं तं । तुह दायव्वं सव्वं देवस्स हि दंसणममोहं ॥ ७८ ॥
तं तव्वयणं सुद्दढीकाउं भूवो भणेइ जइ एवं । ता तं सुमरिअमित्तो मह कज्जं इच्छिअं कुज्जा ॥ ७९ ॥
तेणवि तह पडिवन्नं पडिपुन्नं जस्स होइ खलु पुन्नं । तस्स अवस्सं सिद्धी चिंतिअ अहिआवि इअ होइ ॥ ८० ॥
तो मुइओ महिवइओ चिंतइ जाओऽहमिहवि अहिअसुही । तहवि परदेसगमणाइअं करिस्सं परिक्खत्थं ॥ ८१ ॥
तो जक्खं पइ जंपइ संपइ मं झत्ति नेसु परदेसं । सुरसंचीइ स तत्तो पत्तो पवणोव्व परदेसं ॥ ८२ ॥
तत्थ कुसत्थलनयरे नयरेहारेहिअंमि पहिअव्व । सो उववणंमि चिट्ठइ कयकुट्ठिअकुच्छिअविरूवो ॥ ८३ ॥
तहिं नयरंमि नरिंदो चंदो चंदोव्व कयजणाणंदो । तुज्जं पुण सूरस्सऽवि परस्स तेअं पणासेइ ॥ ८४ ॥
तस्स पिआ पिअवयणा पियवयणा नाम सोमसमवयणा । पढमा गुणेहिं अहिआ विइज्जिआ चंदवयणा य ॥ ८५ ॥
तासि अपुत्ताण दुवे पुत्तीओ परमपेमपत्तीओ । आइल्ला नामेणवि सुलोअणा सुवदणा विइआ ॥ ८६ ॥
ताओ सरिसवयाओ सरिसरुवाओ गुणगरिट्ठाओ । अवइण्णाओ अवणीतलंमि सुरकण्णगाउव्व ॥ ८७ ॥
विहिअकलागहणाओ कमेण नवजुव्वणाउ जणणीहिं । निवपासि पेसियाओ विभूसिआओ विसेसेणं ॥ ८८ ॥
दुन्निवि निवेसिआओ निवेण अत्थाणमंडवठिएणं । रंगेण निउच्छंगे कमलंमि मरालिआउव्व ॥ ८९ ॥
पण्हुत्तरपमुहाहिं बहुविहपुच्छाहिं पुच्छिआओ अ । पच्चुत्तरंति तुरिअं पच्चक्खसरस्सईउव्व ॥ ९० ॥

तद्यथा-नृपादेशादेकेन प्राज्ञंमन्येन प्रथमा कन्या प्रश्नंयामाहे—

"ज्ञानवती चैतन्यं विना विना राज्यमातपत्राढ्या । विद्यां विना द्विरूपा क्षणाद्दृश्या च दृश्या च ॥ ९१ ॥
निम्नाप्यनिम्नसुपमा भीरुरपि त्रिजगतीजनाधारः । अन्तर्मलिना मलिनासक्तिरपि ख्यातनैर्मल्या ॥ ९२ ॥
कन्याङ्कितपुरुषवती क्षणे क्षणे रोषतोषदोषवती । अतिचपलाऽपि सती या तां वद विदुरेऽचिरेणापि॥९३॥त्रिभिर्विशेषकम् ।"
तया तु रयादेवोक्तं-कृतविष्टपनिविष्टशिष्टाशिष्टहर्षदृष्टिर्दृष्टिरियं, एवं द्वितीयेन प्रज्ञादिगुणैरद्वितीया द्वितीयाऽप्यूचे-"चक्रधरोऽपि
न चक्री भूरिघटीघट्टितोऽपि न तु दिवसः । नित्यभ्रमोऽपि न खगो वक्रविहीनोऽपि पङ्गरदनः ॥ ९४ ॥
सस्यसमृद्धिविधाता कर्षकहर्षप्रकर्षदाता च । पातालाज्जलकर्षी जलवर्षी चापि न तु जलदः ॥ ९५ ॥
नैकेन न च द्वाभ्यामपि तु त्रिभिरेव कार्यकृत् सततम् । मालाभृदपि न माली नीचोऽप्युच्चश्च ननु कोऽसौ ? ॥९६॥
त्रिभिर्विशेषकं" । तया झटित्युक्तमरघट्ट इति, पुनः समतिभाभ्यामुभे अभापिपाताम्—

"विनयगुणेन विनेयः सर्वत्रातिशयितां श्रयति नियताम् । अत्र तु जनेऽविनेऽयो विनयविहीनोऽपि चित्रमहो ॥९७॥
सर्वत्रास्खलितनयैस्तनयैरतिशायिता नृणां विदिता । अत्र तु गलितनयाभिस्तनयाभिरपीयमद्भुतकृत् ॥ ९८ ॥
क्रमात्ताभ्यामभाणि-अयः-शुभं कर्म्म ताभिः-लक्ष्मीभिः । एवं पुनर्विषमं प्रश्नद्वयं, यथा—

"विनाऽऽकृतिं विधुः साधुर्वश्चितोऽखण्डमध्ययुक् । यद्रूपं प्राप्नुयात्त्वं, नित्यं प्राप्नुहि किं नु तत् ? ॥ ९९ ॥
कमला विमलाऽनयाश्रिता, ननु सांमत्यमतिस्मयं गता ।अमितेति सुगुप्तनामकं, जैना अभ्युपयंति नाम कम् ? ॥१००॥"

क्रमात्ताभ्यामुक्तं—आकृतिमाकारं विना विगतधुः साधुः (स्) उना अञ्चितो वञ्चितः (उ)अखण्डशब्दस्य मध्यं खं तेन युतः, एतावता सुखं१ कमलाया विगतमलत्वे अने आश्रितत्वे च अनेकसामत्यस्यातिगतस्मयत्वे आन्त् अमूढत्वे चानेकान्तं । पुनरे-केन छेकेनैका बहुविषमप्रश्नि–"ईश १ श्रीजे२ न्दु ४ वालां ४ डज ५ विधि ६ मघव ७ त्कण्ठयवर्णा८ वन९ कुद्भाषा १०-धर्त्री ११ शिवा १२ र्थान् वदत सितकरः कीदृशः १३ को विशेषे १४। हेयः को १५ भ्वादिधातून् कथयत चतुरः १६ स्व-र्णवाची मरालः२० कीदृग्नानार्थभृत्२१ कः स्फुरति वपुषि२२ कस्तीर्थकृत् कः श्रिये स्तात्२३॥१०१॥" अत्र त्रयोविंशतेः प्रश्नानां त्रिभिरेव वर्णैः प्रत्युत्तरं प्रदेहि, तथा सद्य एव प्रत्यगादि-विमल इति, द्वादशाभ्यो जिनः क इति पाठे तूत्तरं सुगममेव, अर्थस्त्वे-वम्-उः-ईशः इः- श्रीजः म- इदुः लसनि-क्रीडतीति लस्-वालः१ विः-अण्डजः सो-विधिर्ब्रह्मा लो-मघवान् विसर्गः कण्ठयवर्णः२ ऊः-अवनं इ- कुत्सापा मलते इति मल-धर्त्री अः-शिवः ३ विमलः ४ विः-विशेषे मलः-पापम् ५ उद्दुंमलअसीरूपाः भ्वादिधा-तवः ६ मरालशब्दान्मलापगमे राः-स्वर्ण७ वि नानार्थे मलः८ त्रयोदशो विमलो जिनः ९ । एवमन्येनान्या प्रोचे-प्रोच्यमानप्र-श्नार्यानां पृथक् पृथग् जात्या एकमेव प्रत्युत्तरं प्रदेहि, तयोक्तं-तदपि विमृश्य दास्यामि, अत्र सुखबोधार्थं प्रश्नोत्तरे सह दर्श्यंते, यथा-कस्मिंस्तुष्टे स्वेष्टं सेवक आप्नोति ? कीदृशस्त्यादिः। अल्पाद्यर्थे? चक्रे के ? कीदृक्षाः प्रवचनज्ञाः ?॥१०२॥अत्रोत्तरं-प्रभावक-वराः, प्रभौ, अक् प्रत्ययादेः पुरोऽका बाधितत्वेन कप् नायातीत्यर्थः अराः प्रभावकराः आदिव्यस्तसमस्तजातिः १ । शब्दं सम्बोधय कोऽल्पाद्यर्थे कान्तिरहितमाख्याहि । कथयोपसर्गयुग्मं कीदृक्षा धर्मकथकाश्च ॥१०३॥ हे रावं कप् , अभ, आ प्र, प्रभावकराः, अन्तव्यस्तसमस्तजातिः २ । उपसर्गः कः प्रथमः का सूर्ये का च महिषसम्बुद्धिः । श्रीजिनशासनभासनलाल-समामन्त्रयस्व तथा॥१०४॥कवयति यः स्वकभावात्प्रभावमाह्वानयैनमय जैनाः । सुरनरवरैरजेयाः कीदृक्षा वादिमुख्याः स्युः ?

॥ ५ ॥ प्र, प्रभा-हे प्रभाव-हे प्रभावक, हे प्रभावकव, हे प्रभावकवराः, आदिवर्द्धमानाक्षरजातिः ३। का मेरौ के कन्याप्रार्थ्या मिश्रांश्च कथय के सरसि। के कृतिनः सुकृतसङ्के निमित्तदक्षाश्च कीदृक्षाः ॥ ६ ॥ राः-स्वर्णं वराः कवराः वकवराः भावकवराः प्रभावकवराः, अन्तवर्द्धमानाक्षरजातिः४। मातस्ताराः कीदृश आमन्त्र्यो नाटके कथं विद्वान्। भीमेन यो निजघ्ने सम्बोध्यो राक्षसः स कथम् ? ॥७॥ कवतेरचि रूपं सम्बोधय वर्यांश्च जिनमते तपसा। विद्यादिभिः सिद्धतयापि प्रथिताः कथय कीदृक्षाः ॥८॥ प्रभाः-प्रगतकान्तयः भाव वक कव वराः प्रभावकवराः, शृङ्खलाजातिः५। कीदृक् पौरजनः के च दुर्वहा आहृवयाप्तवरणानि। अर्के के तुष्टसुरैर्देयाः के कीदृशाः कवयः ॥९॥ प्रराः-प्रकृष्टद्रव्यः भाराः वराः कराः वराः प्रभावकवराः, मञ्जरीसनाथजातिः ६। एवं जातिषट्केऽप्येकमेवात्रोत्तरं । समस्याविद्भ्यां पुनस्ते प्रश्निते, कीटिकोष्ट्रं प्रसूतेति, समस्यां सुभ्रु ! पूरय। कीटिकाख्या करभ्युष्ट्रं, प्रासूतेत्याह साऽअसा ॥१०॥ दृग्भ्यां शृणोति श्रोत्राभ्यां, पश्यत्यङ्गैश्च जिघ्रति। सम्भिन्नश्रोतोलब्ध्याढ्यः, साधुरित्याह कन्यका ॥११॥ पुनर्निपुणगणकाभ्यां प्रश्नद्वयं ते प्रश्नयाञ्चक्राते-यथा- त्र्यंह्रिषडङ्कार्कांशा लोहत्रपुताम्ररजतहेमभुवि। पणाणिखनौ च जग्मुः कति ते पुरुषाः! कथय कन्ये ॥१२॥ तयोक्तम्-तेऽष्टोत्तरशतं, तत्र तृतीयो भागः षट्त्रिंशत् चतुर्थः सप्तविंशतिः षष्ठोऽष्टादश नवमो द्वादश द्वादशो नव शेषाः षट् ॥ स्वषष्ठांशं त्र्यंशं धुरि निजत्रिकांशेन सहितं, चतुर्थांशं तुर्यांशकयुतनवांशं परपदे। तृतीयांशेनाढ्यं द्व्यधिकदशमांशं व्ययितवांश्चतुस्तीर्थ्यां शेषास्त्रय इह सुवर्णाः कति समे ? ॥ १३ ॥ तयैवाऽवादि-ते अष्टोत्तरशतं, तत्र तृतीयोऽंशः षट्त्रिंशत्तत्षष्ठांशेन षड्भिर्युता द्वाचत्वारिंशत् १ चतुर्थोऽंशः सप्तविंशतिस्तत्तृतीयांशेन नवभिर्युताः षट्त्रिंशत् २ नवमोऽंशो द्वादश तच्चतुर्थांशेन त्रिभिर्युताः पञ्चदश १५ द्वादशोऽंशो नव तत्तृतीयांशेन त्रिभिर्युता द्वादश ४ सुवर्णाः क्रमेण श्रीशत्रुंजयरैवतादितीर्थचतुष्टये व्ययिताः केनापि यात्रिकेण शेषाः त्रयस्तत्पार्श्वे स्थिताः ॥ तुर्यषष्ठाष्टमद्वादशोत्रचतुर्विंशभागा युताः

स्वस्वतुर्यांशकैः । भोजिता यात्रिकाः पञ्चभिः शेपिताः, षोडशोपोषिताः ते समग्राः कति ? ॥ १४ ॥ द्वितीयकन्ययोक्तम्-पण्णवतिरते यात्रिकाः, तत्र चतुर्थो भागश्चतुर्विंशतिस्तच्चतुर्यांशेन षड्भिर्युतास्त्रिंशत् १ षष्ठो भागः षोडश तच्चतुर्यांशेन चतुर्भिर्युता विंशतिः २ अष्टमो भागो द्वादश तच्चतुर्यांशेन त्रिभिर्युताः पञ्चदश ३ द्वादशो भागोऽष्ट तच्चतुर्यांशेन द्वाभ्यां युता दश ४ चतुर्विंशो भागश्चत्वारस्तच्चतुर्यांशेनैकेन युताः पञ्च ५ इयन्तो यात्रिकाः क्रमेण पञ्चभिः साधर्मिकर्भोजिताः, शेषाः षोडश कृतोपवासाः ॥ द्व्यंशत्र्यंशचतुर्थपञ्चमकषड्सप्ताष्टमांशैरहोरात्रस्याथ दशांशकेन च किलाष्टाभिः प्रणालैः क्रमात् । या क्रीडास्पददीर्घिका जलभरैः पूर्येत तुल्यक्षणं, युक्तैस्तैर्वद कोविदेऽत्र कियता कालेन सा पूर्यते ? ॥ १५ ॥ द्वितीयकन्यैवाह-अहोरात्रस्य पञ्चचत्वारिंशेन भागेन विंशतिपलाधिकघटीरूपेण सा पूर्यते, तथाहि-इह दीर्घिकामानं यथारुचि भवति, अत्र च साऽष्टहस्तमाना विवक्ष्यते, ततो गणिकशास्त्रोक्तभागजातिरीत्या करणे कृते विंशतिपलाधिकघटीरूपवेलया प्रथमेन नालकेन पञ्चचत्वारिंशद्भागीकृतस्य हस्तस्य षोडशांशाः पूर्यन्ते, द्वितीयेन पञ्चचत्वारिंशद्भागीकृतस्य हस्तस्य चतुर्विंशतिरंशाः, एवं तृतीयेन पञ्चचत्वारिंशद्भागीकृतस्य द्वात्रिंशदंशाः चतुर्थेन पञ्चचत्वारिंशद्भागीकृतस्य हस्तस्य चत्वारिंशदंशाः पञ्चमेनैको हस्तस्त्रयश्चांशाः षष्ठेनैको हस्त एकादश चांशाः सप्तमेनैको हस्त एकोनविंशतिश्चांशाः अष्टमेन त्वेको हस्तः पञ्चत्रिंशचांशाः पूर्यन्ते, एवमष्टहस्तमानापि दीर्घिका पूर्णा स्यात् ।

स्थापना, यथा—

| नालकः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|---|
| हस्ताः | ० | ० | ० | ० | १ | १ | १ | १ |
| हस्तांशाः | १६ | २४ | ३२ | ४० | ३ | ११ | १९ | ३५ |
| हस्तांशमानं | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ |

अह साहइ महिनाहो पहाणमिह किंनु कहह मह सम्मं । कम्मं उवक्कमो वा दुण्हं तुल्लत्तणं अहवा ? ॥ १६ ॥ तो पढिअं पढमाए उवक्कमो विक्कमोव्व सव्वत्थ । फलसंसाहणहेऊ अहलं खुऽणुवक्कमं कम्मं ॥ १७ ॥ भोअणवमणधणज्जणपरआवज्जण-विपक्खदलणमुहं । विज्जारज्जादाणप्पमुहंपि हु उज्जमा चेव ॥ १८ ॥ तदाह—उद्यमेन हि सिध्यन्ति, कार्याणि न मनोरथैः। नहि सुप्तस्य सिंहस्य, प्रविशन्ति मुखे मृगाः ॥ १९ ॥ उद्यमः खलु कर्त्तव्यो, मार्जारस्य निदर्शनात् । जन्मप्रभृति गौर्नास्ति, दुग्धं पिबति नित्यशः ॥ २० ॥ अह बीआए भणियं विणु कम्ममुवक्कम्मस्स किं नु फलं ? । बीअं विणा हि सव्वं निरत्थयं खित्तकरणाई ॥ २१ ॥ उक्तमपि—" महत्युपायेऽपि कृते, विना भाग्यं फलं नहि । पीयूषरुचिपानेऽपि, राहोर्नैवाङ्गपल्लवाः॥ २२ ॥" कम्मं विणा उवक्कमकरणं न भवे उवक्कमीणंपि । कम्माणुसारिणी खलु बुद्धी बुद्धेहिं निद्दिट्ठा ॥ २३ ॥ ता कम्ममेव परमं उवक्कमस्सावि कारणं नूणं । साहेमि अह विसिट्ठं दिट्ठंतं भइणि ! निसुणेसु ॥ २४ ॥ दुन्नि नरा नरवइणो पुरओ पत्ता विवायवायाला । इक्को कम्मं ठावइ बीओ उ उवक्कमं चेव ॥ २५ ॥ ते कूडपाडणकए रन्ना चोरव्व दोऽवि पक्खिविउं । कड्ढिअसव्वभक्खं पिहिअं दारं अगारंमि ॥२६॥ भणिआ य भो उवक्कमफलं पदंसे अहव कम्मफलं । इच्छाए भुंजित्ता निग्गच्छित्ता य इच्छाए ॥२७॥ समयंमि फलइ कम्मं समयंमि उवक्कमोऽवि फलहेऊ । सव्वाणवि वत्थूण नियनियसमयंमि निप्फत्ती ॥२८॥ इअ चिंतिउं उवक्कमवाई काऊण किंचिवि विलंबं । इयरं पइ प्पयंपइ संपइ भण किन्नु करणिज्जं ? ॥ २९ ॥ सो भणइ तं णु भवं सव्वंपि भविस्सए सयमवस्सं । उवविसिअ सुहं चिट्ठसु कम्मं हि पमाणणिज्जं मे ॥ ३० ॥ तं अवगणित्तु इअरो उट्ठित्तु लहेमि किमवि भक्खंति । गयवत्थुव गिहंतो समंतओ साहिउं लग्गो ॥ ३१ ॥ उत्तिवडि मज्झभंडे तत्थतो भक्खकट्टणोवि ठिआ । लद्धा तेण सिणिद्धा पमोअगा मोअगा चउरो ॥ ३२ ॥ दंसेमि निअउवक्कमफलंति आणित्तु ढोइआ तेण । लंबोअररसव

इमे इअरस्स पुरो पभणिअं च ॥ ३३ ॥ पंगुसमं नणु कम्मं न किंचि सिज्झेइ तेण निअकम्मं । विच्छसु पच्चक्खमिम उवक्कमस्सेव फलमउलं ॥ ३४ ॥ हसिउं साहइ बीओ अउच्छकिंच्छेण जं तए लद्धं । तं मह पुरओ मुक्कं मह कम्मस्सेव फलमेअं ॥ ३५ ॥ जुत्तुझवि उवक्कममइं दिन्ना कम्मेण चेव तुट्ठेण । कहमन्नहा अहंपिव तुमवि न ठिओऽसि उवासिउ ? ॥ ३६ ॥ तम्हा अम्हं कम्मं पहाणमपहाणमुज्जमाईअं । कम्मं चेव जिआणं देइ अणंतं सुहं व दुहं ॥ ३७ ॥ इअ भणिअंमि उवक्कमवाईवि तहत्ति तं पयज्जेइ । दिट्ठंतिअं न मन्नइ को वा फुडदिट्ठदिट्ठंतं ? ॥ ३८ ॥ विभइअ भुंजताण अह दुण्हं भाउअव मोयगुए । इक्कंमि कम्मवाई तमि अमुल्लं लहइ रयणं ॥ ३९ ॥ इक्कमणो बहुमाणं जो जस्स करेइ तस्स सोऽवस्सं । तूसेइ देवगुरुधम्ममंतनिवसिद्धिपमुहव ॥ ४० ॥ इय तुट्ठकम्मदिन्ने रयणे सहसगेव भवेण । पत्ते तेण परो दढमई हवइ कम्मपक्खंमि ॥४१॥ अह जह जाओ तारिसमोअगजोगो तहिं कहेमि तहा । सव्व सवमंतो खडुकए सम्ममणवगयं ॥ ४२ ॥ तमि गिहंमि समिद्धो एगो नरदेवसेवगो आसी । तब्भज्जाए छन्नं जामाउअअप्पणाहेउ ॥ ४३ ॥ इगमोअगंमि रयणं पवरं पक्खिविअ मोअगचउक्कं । उत्तिवडि मज्झभंडंमि गोविअं जीविअं वाऽऽसी ॥ ४४ ॥ इत्थंतरे कहंचिवि कुविएण नरेसरेण सकुडुंबो । सो कड्ढिओ गिहाओ तुविणसमाणं हि निवमाणं ॥ ४५ ॥ निवभीओ सव्वसं उज्झिअ सो निग्गओ कुडुंबजुओ । इअ दिववसा तारिसमोअगजोगो तहिं जाओ ॥ ४६ ॥ तं सव्वं विन्नाउ रन्नावि चमकिएण ते मुक्का । कयकम्मपक्खवाया विगयविवाया सुहीजाया ॥ ४७ ॥ तम्हा समग्गकम्मप्पसाहगं कम्ममेव हु तुमंपि । भइणि ! पभणेसु तिहुअणजणो असेसो वसे जस्स ॥ ४८ ॥ पच्चुत्तरप्पयाणं असकयागीइ जिट्ठभइणीए । बलवाइणीइ भणिअं कम्मपसाया जइ असेसं ॥ ४९ ॥ ता तुं साहसु सुहिआ कस्स पसाएण लहसि वा माणं ? । एए जणा असेसा कस्स पसाएण वा सुहिआ ? ॥५०॥ तीए सिद्धं सिट्ठे

किं मुहमिट्ठेण कूडसिट्ठेणं ? । निअनिअकम्मपसाया सुहं दुहं वा असेसाणं ॥५१ ॥ पुन्नुदए जीवाणं राया तूसेइ देइ सव्वंपि । पावुदए उ जमो इव रूसेइ हरेइ सव्वंपि ॥ ५२ ॥ भणिअं च—" सव्वो पुव्वकयाणं कम्माणं पावए फलविसेसं । अवराहेसु गुणेसु अ निमित्तमित्तं परो होइ " ॥५३ ॥ तं सुणिअ धरणिरमणो रुट्ठमणो भणइ दुट्ठि दुव्विअड्ढे । पिच्छसु निअकम्मफलं निअभणिअफलं च तक्कालं ॥ ५४ ॥ इअ भणिअ भणइ निअए नरे नगेसोऽवि सोहिउं नयरे । दुत्थिअकुट्ठिअमेगं दमगं आणेह आहविउं ॥ ५५ ॥ तो तेहिं भमंतेहिं दिट्ठो सो कुट्ठिओ ठिओववणे । कहमवि महिवइ पुरओ आणीओ वंदगहिव्व ॥ ५६ ॥ तो सा कन्ना रण्णा भणिआ मन्नेसि कम्ममेव तुमं । दिन्नं कम्मेण इमं वरसु वरं होसु कयकिच्चा ॥ ५७ ॥ अहहा किं भावित्तिय जणंमि सव्वंमि कंपिअमणंमि । सुअणत्तणेण कुट्ठिअनरंमिवि णिवारयंतंमि ॥ ५८ ॥ कम्मं चेव पहाणीकाऊण अणूणसत्तजुत्ताए । तीए तस्सेव करो गहिओ करगहणरीईए ॥ ५९ ॥ जुगलं ॥ तइआ गुत्तं एगो लग्गविऊ वागरेइ वरलग्गं । संपइ वट्टइ एरिसं वारसवरिसेऽवि न हु सुलहं ॥ ६० ॥ सव्वपयारेण सुहं असमाणमिमाण सुरवराण व । कहमवि धुवं भविसइ लग्गवलेणं भणामि इमं ॥ ६१ ॥ अह रन्नाऽणुन्नाओ इमो इमं गिण्हिऊण गच्छाहि । एईइ सव्वकज्जं कारिज्ज जहेव दासीए ॥ ६२ ॥ साऽवि निवेण सकोवं उल्लविआ विहिअचोरिअव्व अरे । एअं जावज्जीवं निवहसु परं सुहं लहसु ॥ ६३ ॥ सावि तहत्ति कहित्ता गिण्हित्ता तं करंमि अमरंव । साहसिआ निस्सरिआ सिरिव्व सहसा निवगिहाओ ॥ ६४ ॥ नरवइनिवारणाओ दासीवि न निग्गया सममिमीए । निवकोवभया नवि कोवि तं अणिट्ठं व आलवए ॥ ६५ ॥ केवि निवइस्स दोसं दिंति तया केऽवि तीइ कुमरीए । कोवस्स केवि रन्नो अन्ने पुण मंतिपमुहाणं ॥ ६६ ॥ अवरे कुमरीगुरुणो अवरे मुद्धत्तणस्स पुण तीए । कुग्गहगहस्स एगे एगे कम्मस्स धम्मविऊ ॥ ६७ ॥ युगलं ॥ एवं नवनववयणे नयरजणे नयरबाहिरुज्जाणे ।

सह तेण ठिआ गंतुं सा परसायव अविसाया ॥ ६८ ॥ तं तारिसंपि सुरवरसरिसंपिव परमपिम्मरीईए । चिट्ठइ सुस्सूसंती सईण चरिअं महच्छरिअं ॥ ६९ ॥ तं असमंजसमसमं दट्ठुमसत्तोव झत्ति संपत्तो । नहदीवो परदीवं संझावि सइव तमणुगया ॥ ७० ॥ मिच्छत्तभरोव्व घरो तिमिरभरो तत्थ जाव वित्थरिओ । सुणसत्थसत्थरो ता तीए दइअस्स पत्थरिओ ॥ ७१ ॥ तत्थ पसुत्तेण तया तेण इमा अविरलआ परिक्खट्ठा । भद्दे ! दुक्खसमुद्द पडिआसि हहा कह असुद्दे ? ॥ ७२ ॥ मुद्धाइ कयम-जुत्तं पढमं तुमए मएण तो रम्मा । विहियं तु अजुत्तयरं जणओ कह एरिसं कुज्जा ? ॥ ७३ ॥ अपत्यं दुरपत्ये स्याज्ज्ञातस्वल्प-प्रेमगजया । प्रेमातुरौ तु पितरौ, स्यातां कुपितरौ कथम् ? ॥ ७४ ॥ अज्जवि किमवि न नट्ठं नेव विणट्ठं च गच्छ सिच्छाए । अवरं केणवि पवरं वरसु वरं होउ कयकिच्चा ॥ ७५ ॥ संपइ न कोइ पिच्छइ न य पुच्छइ किंपि गच्छ सच्छंदं । लच्छीण पवच्छीण य सयहिं ठाणं सयहुमाणं ॥ ७६ ॥ नाहं निअनिवाहंपिहु काउ पहू पकुच्छणिज्जो अ । ता मज्झ अभेज्जस्स य नाओ नाउधिअ सुदूरं ॥ ७७ ॥ तं सुणिअ धुणिअसीसा ढंकिअकन्ना कहेइ सा कन्ना । हा नाह ! दाहहेऊ कहमेरिसमसरिसं भणसि ? ॥ ७७ ॥ अणंता पावरासीओ, जया उदयमागया । तया इत्थित्तणं पत्तं, सम्मं जाणाहि गोअमा ! ॥ ७९ ॥ इय वयणाओ पढमं महिलाजम्मं हवेइ अइअहमं । तंपि जइ सीलभट्ठं ता उच्छिट्ठं अणिट्ठं च ॥ ८० ॥ तम्हा तुम्हाणं चिअ चरणा सरणा इमंमि जम्मंमि । निअपुव्वकम्मदिन्नो पई सईणं हि देवव्व ॥ ८१ ॥ इअ तीइ दढत्तणओ चित्तंमि चमक्किओ पमुइओ अ । भूओ भणेइ भद्दे ! कहमेवं जम्मनिवाहो ? ॥ ८२ ॥ ता जइ कहमवि अहमवि हवामि नवजुव्वणो सुदिव्वतणू । ता चेव हवइ जुत्तं असरिसजोगंमि को णु रसो ? ॥ ८३ ॥ एवं भणित्तु सुरवरसत्तीइ करित्तु झत्ति निअरूवं । देवव दिव्वरूवं वि-म्हिअमुइअं कुणइ दइअं ॥ ८४ ॥ सामि ! किमिमंति पुच्छइ जाव इमा ताव पिच्छइ अउच्छं । वत्थेव देवभवणं व निम्मिअं

तेण मणिभवणं ॥ ८५ ॥ मज्झे च दिव्वमिकं पल्लंकं तं च तत्थ उवविट्ठं । इंदं व छत्तचामरनाडयपरसुरसुरीविंदं ॥ ८६ ॥ सुविण व इंदजालं मायाजालं व मोहजालं वा । किमिमंति विम्हिरमुही भणिया सुमुही महीवइणा ॥ ८७ ॥ मा कप्पेसु विकप्पे रइकप्पे निअमणे महाणप्पे । तुट्ठसुरो रायाऽहं तुह सुहकम्मेण इह पत्तो ॥ ८८ ॥ तो सव्वं निअचरिअं परूविउं सो परूवए सुभगे ! । तुमए पमाणिअं जं कम्मं तं चेव तुह तुट्ठं ॥ ८९ ॥ रन्नो पुण अन्नाणं मुहाऽभियाणं च किं च असमाणं । तंपिहु तुहप्पहाए इड्ढिं पिच्छित्तु गच्छिहिही ॥ ९० ॥ तो हरिसुल्लसिरीए तीए महिमत्थमखिलरत्तीए । नट्टं दिव्वं विहिअं जओ चमक्केइ सक्कहिअं ॥ ९१ ॥ अह कुट्ठिअस्स कन्नं दाउ मए दंसिअं हि रोसफलं । विउलं तोसफलंपि हु तक्कालं चेव दंसेमि ॥ ९२ ॥ इअ गविअ चंदुवीसरेण इक्कस्स रायकुमरस्स । अमरस्स व रूवेणं समहं दिन्ना पढमकन्ना ॥ ९३ ॥ तद्दिण-रयणीइ विइअपहरंमि परं गहित्तु सो लग्गं । मंडइ सविड्ढीए महुस्सवं सवओ नयरे ॥ ९४ ॥ तेणुच्छवेण जगजणहरिसप्प-सवेण लग्गवेलाए । जाओ तेसि विवाहो कयपउरपसंसणुच्छाहो ॥ ९५ ॥ अह असुहदिव्वसओ विणिग्गओ उग्गसिहरो तत्थ । तिहुअणसंहरणकरो भयंकरो जमकरोव्वऽवरो ॥ ९६ ॥ तन्नामसवणओऽवि हु अणप्पकप्पंतपवणउ व्व लहुं । जलनिहिगो खलभलिआ जणा असेसावि भयकलिआ ॥ ९७ ॥ तइआ भयसंभंतो जलप्फलंतो अहिंपि चंपंतो । रुट्ठेण तेण दट्ठो वरो पविट्ठो जममुहंमि ॥ ९८ ॥ तदुक्तम्–" अन्नह परिचिंतिज्जइ कज्जं परिणमइ अन्नहा चेव । विहिवसयाण जियाणं मुहुत्तमित्तंपि वहुविग्घं ॥ ९९ ॥ " एआरिसंमि समए एरिस असमंजसेऽवि संजाए । जायइ जणाण धिद्धी वेरग्गं नेव थेवंपि ॥ २०० ॥ अइसोअभरेण तओ मुणिव्व मोणट्ठिएसु सव्वेसु । तं दिव्वनाडयझुणिं सुणंति सम्मं निवप्पमुहा ॥ २०१ ॥ चिंतिंति तह चम-क्किअहिअआ अवितक्कियं इहं किमिमं । एसा असुरिंदस्स व रिद्धी अहवा सुरिंदस्स ? ॥ २०२ ॥ एवं स[illegible]मिवि चित्तंमि ॥ ९ ॥

चमक्किअंमि महिसको । गोसे डुरिसे पेसिअ निअए पुच्छइ किमेयंति ? ॥ २०३ ॥ ते अवगयवुत्तंता निरवस साहंति जहट्ठिअं सवं । तो अइविम्हयलज्जारणरणयवसो निवो जाओ ॥ २०४ ॥ तत्तो अभिमाणभरं अणिट्ठभारं व उज्झिउं राया । सम्माणिअ निअकन्नं पुन्नं मन्नइ समत्थंति ॥ २०५ ॥ पुहवीपालस्स निवप्पवरस्स निवेण भवणदविणाई । जामाउअरीईए दिन्नं बहुमाणओ सुबहुं ॥२०६॥ पुट्ठो नाणिविसिट्ठो रन्ना कल्लाणमन्नदिणि दुण्हं । पुवभवं भणइ पुरा इमा दुवे दुण्ह इब्भाणं ॥२०७॥ धणधणयनामयाणं भज्जाओ सयणमाणणिज्जाओ । धणसिरि धणप्पहाओ जुण्हपहाउव्व ससिरविणं ॥ २०८ ॥ दोऽवि जिणधम्मनिरया विरया पाएण पावठाणाओ । नाणाराहणनिउणा विहिउवहाणाइबहुमाणा ॥ २०९ ॥ नवरं पढमा किविणा दविणाइवयण दूमए अहिअं । किं बहुणा भावेणं न देइ दाणं मुणीणंपि ॥ २१० ॥ किंतु किविणत्तेणं निअगेहसमागयाण साहूणं । अन्ने दाहिंति बहुं नाहं दाही सहत्थेणं ॥ २११ ॥ युग्मं । इअ चिंतिअ अब्भुट्ठिअ बहुभत्ति आयरं च दंसंती । संतं बहुंपि सार थोवयरं चेव पयडंती ॥ २१२ ॥ जइ महरिसीण दोसो थोवोऽवि न लग्गए तहा दिज्जइ । सुद्धं सुपत्तदाणं अणुअंपि अणंतफलहेऊ ॥ २१३ ॥ इअ जंपंती वारिअ निअडीइ परं निअयहत्थेणं । अइथोवतरं किंचिवि देइ मुणीणं मणेण विणा ॥ २१४ ॥ संतंपि सा असंतं एवं निअयंपि भणइ पारक्कं । सुद्धं भणइ असुद्धं धिद्धी हुं अदाणबुद्धीए ॥ २१५ ॥ इअ तीइ साविआइत्ति धम्मपराएवि दुद्धरं बद्धं । भोगंतरायकम्मं फलं खु किविणत्तणस्स इमं ॥ २१६ ॥ ही ही मूढा जीवा जिणधम्मं निम्मलंपि लहिऊणं । असमंजसचिट्ठीए अत्ताणं हंत मइलंति ॥ २१७ ॥ बीआ उदारचित्ता सुपत्तदाणेण सुद्धभावेण । बंधइ सुहभोगफलं जीवा हि विचित्तपरिणामा ॥ २१८ ॥ ते दोऽवि देवलोए पत्ता देवत्तणेण मरिऊणं । नवरं पढमा जाया किंविसियाणं विमाणंमि ॥ २१९ ॥ तत्तो चइत्तु जाया पुत्तीओ तुज्झ पेमपत्तीओ । निअनिअकम्मवसेणं दुण्हं खलु

एरिसं जायं ॥ २२० ॥ तो पुच्छइ पुहविवई सामिअ ! साहेसु अम्ह संदेहं । कम्मं उवक्कमो वा पहाणमिह होइ जीवाणं ? ॥ २२१ ॥ नाणी मुणी पयंइ नरवइ ! दुण्हंपि इत्थ तुल्लत्तं । कत्थवि कम्मं कत्थवि उवक्कमो होइ इह वलिओ ॥२२२॥ तदुक्तं- " कत्थवि जीवो वलिओ कत्थवि कम्माइं हुंति वलिआइं । जीवस्स य कम्मस्स य पुव्वनिबद्धाइं वेराइं ॥ २२३ ॥ कम्मवसा खलु जीवा जीववसाइं कहिंचि कम्माइं । कत्थइ धणिओ वलवं धारणिओ कत्थई बलवं ॥ २२४ ॥ कम्मं जइवि जिआणं भवं भमंताण देइ अइदुक्खं । तहवि निहणेइ सव्वं धम्मस्स उवक्कमो तंपि ॥ २२५ ॥ कहमन्नहा अणंता अणंतभवसंचिआणऽणंताणि । कम्माणि निहणिऊणं संपत्ता सासयं सुक्खं ॥ २२६ ॥ चुलणी दढप्पहारी कुकम्मकारीवि इह उवक्कमओ । सिद्धा गया य सग्गं चिलाइतणओ अ रोहिणिओ ॥ २२७ ॥ ता चेवऽणिट्ठनिट्ठुरकम्मखयट्ठा उवक्कमो निच्चं । धम्मत्थिएहिं किज्जइ एवं हि उवक्कमो वलवं ॥ २२८ ॥ तदुक्तम्-" सर्वकर्मसु सदैव देहिनामुद्यमः परमवान्धवो मतः। यं विना हृदयवाञ्छितान्यहो, नाप्नुवंति नियतं यदि स्थिराः ॥ २२९ ॥ " जत्थ विविहेऽवि विहिए उवक्कमे नेव सिज्झए कज्जं । कम्मं तत्थ समत्थ तिव्वतममवस्स भुत्तव्वं ॥ २३० ॥ वीरजिणो नीअकुले मल्ली इत्थी परिक्खिनिवमरणं । तह नंदिसेण अद्दयकुमारपडणं च कम्मवसा ॥ २३१ ॥ अवाचि च—" दृग्नाशो ब्रह्मदत्ते भरतनृपजयः सर्वनाशश्च कृष्णे, नीचैर्गोत्रावतारश्चरमजिनपतेर्मल्लिनाथेऽबलात्वम् । निर्वाणं नारदेऽपि प्रशमपरिणतिः स्याच्चिलातीसुतेऽपि, इत्थं कर्म्मात्मवीर्ये स्फुटमिह जयतः स्पर्द्धया तुल्यरूपे ॥२३२॥ इअ कम्मुवक्कमाणं सुणित्तु तुल्लत्तमुट्ठिओ राया । सम्मं धम्मउवक्कममईं कुकम्माणि निहणेउं ॥ २३३ ॥ अह विहिणा महिणाहो रज्जं जामाउअस्स दाऊणं । दुहिअदुहिआइ सहिओ गहिउं दिक्खं गओ मुक्खं ॥ २३४ ॥ अह तत्थ रज्जसुत्थं काऊणं पत्थिवो पुहविपालो । मघवं व महिड्ढीए सकलत्तो निअपुरं पत्तो ॥ २३५ ॥ अथ श्लोकाः—इत्थं चतुर्थपादार्थस्यापि

संवादतोऽभवत् । पृथ्वीपालनृपः शास्त्रेष्वयानबहुमानवान् ॥ २३६ ॥ अज्ञानास्त्राणि शास्त्राणि, शृण्वतस्तस्य सादरम् । धीर्धर्माराधने जज्ञे, किं हि ज्ञानान्न सम्भवेत् ? ॥ २३७ ॥ दर्शं दर्शं दर्शनिनां, स धर्मानसधर्मणः । सम्यक्परीक्षावीक्षातः, प्रपेदे धर्ममार्हतम् ॥ २३८ ॥ धर्मे परिणतिस्तस्य, क्रमाज्जज्ञे यथा यथा । तथा तथा श्रुतज्ञानबहुमानः स्म वर्द्धते ॥ २३९ ॥ स श्रुतश्रुतिपाठादौ, तथा तन्मयतामधात् । यथा सुस्फीतसङ्गीतरसेऽपि विरसोऽभवत् ॥२४०॥ बहुश्रुतबहुमानोपष्टम्भस्पष्टनादिना । लेखनोद्यापनाद्यैश्चाराधयामास स श्रुतम् ॥२४१॥ एवं श्रुताराधनेन, साधनेन शिवश्रियः । साधयामास दुस्साधमपि दुष्कर्मणां क्षयम् ॥२४२॥ श्रुतार्थं भावयन्नुच्चैश्चित्तैकाग्र्येण कर्हिचित् । आरूढः क्षपकश्रेणिं, निःश्रेणिं शिवसद्मनः ॥२४३॥ तदैव केवलालोकं, लोकालोकप्रकाशकम् । स लेभेऽस्य विलेभे च, ऋषिवेषः सुपर्वभिः ॥ २४४ ॥ सोऽनुभूतस्वदृष्टान्तस्पष्टनाद्युपदेशतः । श्रुतज्ञानाराधनायां, सावधानान् व्यधाद्बहून् ॥ २४५ ॥ प्रतिबोध्य प्रतिबोध्य, प्रतिबोध्यानितीह सः । चिरं विहारविधिना, विजहार परम्पदम् ॥२४६॥ इति श्रुतादौ बहुमानमात्रात्, मात्राव्यतीतं किल तद्व्ययेऽपि । विभाव्य भव्याः! फलमेतदाराधनाविधाने प्रयतध्वमुच्चैः ॥ २४७ ॥

## ॥ इति श्रुतज्ञानाराधने पृथ्वीपालभूपालकथा ॥

श्रुतज्ञानाद्याराधनं च सम्यग्ज्ञानाचाराचरणचातुर्ये सत्येव सङ्गच्छते, ज्ञानाचारश्चाष्टधा, यदुक्तं श्रीनिशीथभाष्यपीठादौ–
"काले १ विणए २ बहुमाणे ३ उवहाणे ४ तह य णिण्हवणे ५ । वंजण ६ अत्थ ७ तदुभए ८ अट्ठविहो नाणमायारो ॥१॥"
तत्र काले–सूत्रपौरुष्यां सूत्रं पठनीयं गणनीयं वा अर्थपौरुष्यां त्वर्थः उत्कालिकश्रुतादि वा, कालिकश्रुतमुत्तराध्ययनाचाराङ्ग-

गादि दिवा रात्रौ च प्रथमचतुर्थपौरुष्योरेव, उत्कालिकं तु दशवैकालिकादि दृष्टिवादश्च सर्वासु पौरुषीषु, कालिकोत्कालिकयोरुभयोरप्यनध्यायाद्यस्वाध्यायकालो लघुघटीद्वयद्वयमानः, प्रत्यहोरात्रं चतस्रः कालवेलाश्च परिहार्याः । यदुक्तं निशीथसूत्रे एकोनविंशोद्देशके-' जे भिक्खू चउहिं संझाहिं सज्झायं करेइ करंतं वा साइज्जइ, तंजहा-पुव्वाए संझाए पच्छिमाए मज्झण्हे अत्थमणे अड्ढरत्ते'' त्ति, निशीथचूर्णावपि 'संझाचउ'त्ति अणुदिए सूरिए मज्झण्हे अत्थमणे अड्ढरत्ते, एआसु चउसु सज्झायं न करिंति, तथा निशीथसूत्रे पञ्चमोद्देशकेऽपि वसतिमाश्रित्य 'जे सपाहुडिअं सिज्जं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ' अत्र भाष्यम्-पुव्वण्हे अवरण्हे, सूरंमि अणुग्गए व अत्थमिए । मज्झण्हे इअ वसही सेसं कालं पडिकुट्ठा ॥ १ ॥ एतच्चूर्णिः-जासु सुत्तत्थपोरिसिवेलासु पाहुडिआ किज्जइ सा वाघाइमा, छिण्णकाले निव्वाघाइमा । 'पुव्वण्हे' गाहा, पुव्वण्हे जा अणुग्गए सूरिए अवरण्हे जा अत्थमिए मज्झण्हे कालवेलाए अत्थपोरिसिउट्ठिआण । अत्र श्रीकल्पवृत्तौ व्याख्यैवं-एतेषु कालेषु यस्यां प्राभृतिका क्रियते सा वसतिरनुज्ञाता सूत्रार्थव्याघाताभावात्, शेषे उद्गतसूर्यादौ काले यस्यां प्राभृतिका विधीयते सा प्रतिक्रुष्टा-न कल्पते तस्यां वस्तुं, सूत्रार्थव्याघातसंभवात्, प्राभृतिका-छगणलेपनादिरूपा । व्यवहारवृत्तावप्युक्तम्-'चउसंझासु न कीरइ' इति, चतस्रः सन्ध्याः तिस्रो रात्रौ, तद्यथा-प्रस्थिते सूर्ये अर्द्धरात्रे प्रभाते च, चतुर्थी दिवसमध्यभागे, एतासु चतसृष्वपि स्वाध्यायो न क्रियते इति, आचरणया तु रात्रौ द्वे कालवेले-मध्यरात्रे रात्र्यन्ते च, दिनेऽपि द्वे-मध्याह्ने दिनान्ते च । खरतरश्रीजिनदत्तसूरिकृते सन्देहदोलावलीसूत्रेऽप्येवमुक्तम्—" चउपोरिसिओ दिवसो दिणमज्झंते अ दुन्नि घडिआओ । एव रयणीमज्झे अंतंमि अ ताउ चत्तारि ॥ १ ॥ " इदमैदंपर्यं-आगमाभिप्रायेण सायमस्तमिते सूर्ये कालवेला, आचरणानुसारेण तु सूर्यास्तमयात्प्राग्, सम्यग् निर्णयं तु सम्यग्ज्ञानिन एव विदन्ति । यद्वा कालो-वत्सरादिः

श्रुताध्ययनयोग्यः, यदुक्तं पञ्चवस्तुके—कालक्कमेण पत्तं संवच्छरमाइणा उ जं जंमि । तं तमि चेव धीरो वाइज्जा सो अ का-लोऽयं ॥ १ ॥ तिवरिसपरियागस्स उ आयारपकप्पनाममज्झयणं । चउवरिसस्स य सम्मं सूअगडं नाम अज्झयणं ॥२॥ अत्राचारप्रकल्पो—निशीथाध्ययनं । दसकप्पववहारा संवच्छरपणगदिक्खिअस्सेव । ठाणं समवाओऽविअ अंगे ते अट्ठवासस्स ॥ ३ ॥ दसवासस्स विवाहो इक्कारसवासयस्स उ इमे उ । खुड्डिअविमाणमाई अज्झयणा पंच नायव्वा ॥ ४ ॥ बारसवासस्स तहा अरुणुववायाइ पंच अज्झयणा । तेरसवासस्स तहा उट्ठाणसुआइआ चउरो ॥ ५ ॥ चउदसवासस्स तहा आसीविसभावणं जिणा बिंति । पण्णरसवासगस्स य दिट्ठीविसभावणं तहय ॥ ६ ॥ सोलसवासाईसु अ इक्कुत्तरवड्ढिएसु जहसंखं । चारणभावणमहसुविणभावणातेअनिस्सग्गा ॥ ७ ॥ एगूणवीसगस्स उ दिट्ठीवाओ दुवालसममंगं । संपुन्नवीसवरिसो अणुवाई सव्वसुत्तस्स ॥ ८ ॥ अयमर्थः सर्वोऽपि व्यवहारसूत्रेऽस्ति यथा—" तिवासपरियायस्स निग्गंथस्स कप्पइ आयारपकप्पं नाम अज्झयणं उद्दिसित्तए " इत्यादि, एवमागमोक्तकालं मुक्त्वा अकाले दर्पादिना पठनगुणनादावाज्ञाभङ्गः ज्ञानाचारविराधनादिदोषैः प्रायश्चित्तमकालस्वाध्यायकारीत्वेन प्रमत्तत्वाद् दुष्टदेवताच्छलनादि च । तथाहि निशीथभाष्ये—"पुव्वावरसंझाए मज्झण्हे तहय अड्ढरत्तंमि । चउसंझा सज्झायं जो कुणई आणमाईणि ॥ १ ॥ लोएऽवि होइ गरिहा संझासु उ गुज्झगा य विचरंति । आगासग उवओगो आसासो चेव खित्तागं ॥ २ ॥ कामं सुओवओगो तवोवहाणं अणुत्तरं भणिअं । पडिसेहिअंमि काले तहावि खलु कम्मबंधाय ॥ ३ ॥ " लोकेऽपि कालवेलायां सन्ध्यावन्दनवैश्वदेवतर्पणहोमादिनार्यं शान्तिककर्मैवोक्तं न स्वाध्यायः, तस्य परमतत्त्वात्मकत्वेन दुष्टवेलायां निषिद्धत्वात्, तदाह—चत्वारि खलु कर्माणि, सन्ध्याकाले विवर्जयेत् । आहारं मैथुनं निद्रां, स्वाध्यायं च विशेषतः ॥ १ ॥ आहारात् जायते व्याधिः, क्रूरगर्भश्च मैथुनात् । निद्रातो

धननाशश्च, स्वाध्याये मरणं भवेत् ॥ २ ॥ ततः सन्ध्यासु स्वाध्याये एते सर्वज्ञपुत्रत्वमात्मनि ख्यापयन्तोऽप्येतावदपि न जानन्तीति लोकेऽपि गर्हा स्यात्, तथा सन्ध्यासु स्वाध्यायव्यग्रत्वे साधोरवश्यकार्ये प्रतिक्रमणादौ श्राद्धस्य देवपूजाप्रतिक्रमणादावनुपयुक्तत्वं स्यात्, तदकरणे तु तत्रोपयुक्तत्वं निरन्तरस्वाध्यायखिन्नानां विश्रामश्च तदा स्यातां, ततः श्रुतपाठादि उक्तकाल एव कार्यं, विशेषकारणैस्तु कालव्यत्ययेऽपि न दोषः, तथा निशीथादौ अनुज्ञातत्वात् । ननु यथा शुभध्यानं सर्वकालमपि मोक्षहेतुत्वेनोक्तं तथा किं न श्रुतज्ञानमपि ? तस्यापि मोक्षहेतुत्वात्, मोक्षहेतोश्च कः कालः कश्चाकालः ?, सत्यम्, परं शुभध्यानं सर्वधर्मक्रियानुगं मानसिकं च, न हि तेन काचिद्धर्मक्रिया बाध्यते, किन्तु सर्वापि प्रत्युत पोष्यते, तेन तस्य सार्वकालिकत्वं युज्यते, श्रुतज्ञानं तु पठनगुणनादिसाध्यं द्विसन्ध्यावश्यकादिवन्नियतकाले एवोचितं, तस्यैव सर्वकालं पाठाद्यभ्यासेऽन्यान्यपुण्यक्रियाबाध एव स्यात्, न च तथा युक्तम्, अन्योऽन्याबाधयैव तासामुक्तत्वाद्, उक्तं च श्रीओघनिर्युक्तौ—" जोगो जोगो जिणसासणंमि दुक्खक्खया पउंजंतो । अन्नुन्नमबाहाए असवत्तो होइ कायव्वो ॥ १ ॥ " न च मोक्षहेतुत्वे कालविभागस्यायुक्तत्वमाहारविहारादीनां साधोर्मोक्षहेतुत्वेऽपि कालविभागस्योक्तत्वाद्, यदागमः—'तइआए पोरिसीए, भत्तपाणं गवेसए ' । तथा—अकाले चरसि भिक्खू, कालं न पडिलेहसि । अप्पाणं च किलामेसि, संनिवेसं च गरिहसि ॥ १ ॥ तथा—विहारो उडुबद्धे न वासासु, अहवा दिवा न राओ, अहवा दिवसओऽवि तइआए न सेसासु" इति निशीथचूर्णौ । लोकेऽप्युक्तम्—याममध्ये न भोक्तव्यं, यामयुग्मं न लङ्घयेत् । याममध्ये रसोत्पत्तिर्युग्मादूर्ध्वं बलक्षयः ॥ १ ॥ ग्रीष्महैमन्तिकान् मासानष्टौ भिक्षुर्विचङ्क्रमेत् । दयार्थं सर्वजीवानां, वर्षास्वेकत्र संवसेत् ॥ २ ॥ दानाद्यपि काले विशेषफलं, यतः—पहसंतगिलाणेसुं आगमगाहीसु तह य कयलोए । उत्तरपारणगंमि अ दिण्णं सुबहुप्फलं होइ ॥ १ ॥ काले दिण्णस्स

पहेणयस्स अग्घो न तीरए काउं । तस्सेव अथक्कपणामिअस्स गिण्हंतया नत्थि ॥ २ ॥ 'पहेणयस्स'त्ति पथ्यदनस्य 'अथक्कपणामिअस्स'त्ति अनवसरदत्तस्य । करचुलुअपाणिएणवि अवसरदिण्णेण मुच्छिअं जिअइ । पच्छा मुआण सुदरि ! घडसयदिण्णेण किं तेण ? ॥ ३ ॥ कृषिवाणिज्यसेवाद्यपि काल एव कृत बहुफलं, न त्वन्यथा, उक्तमपि-" कालंमि कीरमाणं किसिकम्मं बहुफलं जहा भणिअं । इअ सव्वच्चिअ किरिआ निअनिअकालंमि कायव्वा ॥ १ ॥ " मन्त्रविद्यादिसाधनमपि यथोक्तकाले एव सफलमन्यथा त्वनर्थहेतुरपि स्यात् । तदेवं काले स्वाध्यायः कार्यो, न त्वकाले, अत्र तक्रघटदृष्टान्तो यथा-मधुरायामेकः साधुः प्रादोषिकं कालं गृहीत्वाऽतिक्रान्तायामपि पौरुष्यां कालिकश्रुतमनुपयोगात् पठति, मैनं प्रान्तदेवता छलयेदिति तद्बोधार्थं शासनदेवता तक्रघटं लात्वा तत्पुरस्तादाभीरीरूपेण ' तक्रं विक्रीयते २ ' इत्युद्घोषयन्ती गतागतानि कुर्वाणा तेनर्षिणा स्वाध्यायव्याघातकर्त्रीति भणिता-कोऽयं तक्रविक्रयकालः ?, तयोक्तम्—तवापि कोऽयं कालिकस्वाध्यायकालः ?, ततः साधुरुपयुक्तो मिथ्यादुष्कृतं ददौ । इति व्याख्यातः प्रथमः कालाचारः १ ॥

तथा विनयो-गुरोर्ज्ञानिनां ज्ञानाभ्यासिनां ज्ञानस्य ज्ञानोपकरणानां च पुस्तकपृष्ठकपत्रपट्टिकाकपरिकास्थापनिकाउलिकाटिप्पनकदस्तरिकादीनां सर्वप्रकारैराशातनावर्जनभक्त्यादिर्यथार्हं कार्यः, आशातनाभेदाश्चास्मत्कृतश्राद्धविधिवृत्तेर्ज्ञेयाः । तत्र गुरोर्ज्ञानिनां च व्यक्तया विनयोऽभ्युत्थानासनदाननिषद्यादण्डकग्रहणपादधावनविश्रामणावन्दनादेशकरणशुश्रूषणादिरूपः, यदार्षम्-"अब्भुट्ठाणंजलिकरण, तहेवासणदायणं । गुरुभत्ति भावसुस्सूसा, विणओ एस विआहिओ ॥१॥ तथा—नीअं सिज्जं गइं ठाणं, नीअं च आसणाणि अ । नीअं च पाए वंदिज्जा, नीअं कुज्जा य अंजलिं ॥२॥ 'भावसुस्सूस'त्ति भावेन शुश्रूषा-तदादेशं प्रति श्रोतुमिच्छा पर्युपासना चेति श्रीउत्तराध्ययनवृत्तौ व्याख्यातं, श्रीदशवैकालिकवृत्तौ तु शुश्रूषणाविनय एव दशधैवं प्राक्तन-

गाथाभिर्दर्शितः–" सुस्सूसणा अणासायणा य विणओ अ दंसणे दुविहो । दंसणगुणाहिएसुं कज्जइ सुस्सूसणाविणओ ॥ १ ॥ सक्कार १ ब्भुट्ठाणे २ सम्माणा ३ऽऽसणअभिग्गहो ४ तह य । आसणअणुप्पयाणं ५ किइकम्मं ६ अंजलिगहो अ ७ ॥ १ ॥ इंतस्सऽणुगच्छणया ८ ठिअस्स तह पज्जुवासणा ९ भणिया । गच्छंताणुव्वयणं १० एसो सुस्सूसणाविणओ ॥ २ ॥ " इह सत्कारः–स्तवनवन्दनादिः सन्मानो-वस्त्रपात्रादिपूजनं आसनाभिग्रहः–तिष्ठत आदरेणासनानयनपूर्वकमुपविशतात्रेति भणनं, आसनानुप्रदानम्–आसनस्य स्थानात्स्थानान्तरसञ्चारणम् । एष शुश्रूषणाविनय उपचारविनयोऽप्यन्तर्भवति, उपचारविनयश्च श्रीदशवैकालिकवृत्तौ प्राक्तनगाथाभिः सप्तधैवमुक्तः—" अब्भासऽच्छण १ छंदाणुवत्तणं २ कयपडिकिइ ३ तह य । कारिअ-निमित्तकरणं ४ दुक्खत्तगवेसणा तह य ५ ॥ १ ॥ तह देसकालजाणण ६ सव्वत्थेसु तह अणुमई भणिआ । उवयारिओ उ विणओ एसो भणिओ समासेणं ॥ २ ॥ " आदेशार्थिना नित्यं गुरोः समीपे आसितव्यं १ छंदोऽनुवर्त्तनीयं २ कृतप्रतिकृतिर्नाम कृते भक्तादिनोपचारे प्रसन्ना गुरवः प्रतिकृतिं-प्रत्युपकारं सूत्रादिदानतः करिष्यन्ति, न नाम निर्ज्जरैवेति भक्तादिदाने यतितव्य ३ श्रुतं प्रापितोऽहमनेनेति श्रुतप्रापणादिकं कार्यं निमित्तं-कृत्वा विशिष्य विनये वर्त्तितव्यं, तदर्थमनुष्ठानं च कर्त्तव्यं ४ दुःखार्त्तस्य गवेषणमौषधादेः, पीडितस्योपकारकरणमित्यर्थः ५ अवसरज्ञानं ६ सर्वार्थेष्वानुकूल्यं च ७ ॥ ज्ञानाभ्यासिनां विनयः सम्यक् शोधितपुस्तकाद्यर्पणसूत्रार्थपरिपाटीप्रदानाहारोपाश्रयाद्युपष्टम्भनादिः । ज्ञानस्य विनयः श्रद्धानमुपधानादिविधिना सूत्रार्थग्रहणाभ्यासौ विधिना परस्य सूत्रार्थप्रदानं तदुक्तार्थानां सम्यग्भावना तदुक्तानुसारेण सम्यग् अनुष्ठानकरणं स्वयं परेण वा पुस्तकेषु लेखनं कर्पूरादिभिरभ्यर्चनं ज्ञानाराधनार्थं पञ्चम्यादितपस्तपनं तदुद्यापनकरणं चेत्यादि, उक्तं हि—" नाणं सिक्खइ नाणं गुणेइ नाणेण कुणइ किच्चाइं । नाणी नवं न

विनय
स्वरूपम्
॥१३॥

बंधइ नाणविणीओ हवइ तम्हा ॥ १ ॥ " ज्ञानोपकरणानां विनयः पुस्तकादीनां नव्यानां विधापनं लेखनं शोधनपृष्ठकेष्टनकवरकादिविशिष्टतरतदुपस्करकारणं विनष्टानां समारचनं कर्पूरपट्टकूलादिभिस्तत्पूजनमित्यादि, यतः—" अस्तं गतेषु जिनेश्वरेषु, सर्वेषु विश्वत्रयभास्करेषु । विधीयते सम्प्रति पुस्तकाख्यदीपैः पदार्थेष्वकृशः प्रकाशः ॥ १ ॥ ॥ " विनयो हि लोके लोकोत्तरेऽपि सर्वत्रावन्ध्यं सर्वार्थसिद्धिसाधनम्, आह च–" विणओ आवहइ सिरिं लहइ विणीओ जसं च कित्तिं च । न कयाइ दुव्विणीओ सकज्जसिद्धिं समाणेइ ॥ १ ॥ " दृश्यन्ते च सेवकाः शिष्याः पुत्राः स्नुषाश्च सुविनीताः स्वस्वामिपदवीं प्राप्नुवन्तो दुर्विनीताश्च तद्विपरीतं, गोमहिषीवृषभतुरगाद्याः पशवोऽपि दुर्विनीता बन्धनताडनादिक्लेशमनुभवन्ति सुविनीतास्तु तल्लेशं विना सुखासिकां पूजादि च । विनयश्च विद्याविवेकौदार्यगाम्भीर्यचातुर्यधैर्यप्रसिद्धिमतिष्ठादिगुणानां मूलभूतः, तस्मिन् सत्येव प्रायस्तेषां सम्भवाद् असति चासम्भवात्, तदभ्यधायि–" खंती सुहाण मूलं कोहो मूलं दुहाण सयलाणं । विणओ गुणाण मूलं माणो मूलं अणत्थाणं ॥ १ ॥ " धर्मस्यापि च मूलं विनय एव, यतः—" विणओ सासणे मूलं, विणीओ संजओ भवे । विणयाओ विप्पमुक्कस्स, कओ धम्मो कओ तवो ? ॥१ ॥" षष्ठेऽङ्गेऽपि सहस्रपरिवारपरिव्राजकमुख्यव्याससुपुत्रशुकभट्टारकेण शौचमूलं स्वधर्मं ग्राहितस्य सौगन्धिकापुरीवासिसुदर्शनश्रेष्ठिनः प्रतिबोधार्थं श्रीनेमिजिनदीक्षितसहस्रशिष्यपरिवृतचतुर्दशपूर्विथावच्चापुत्राचार्यवचो यथा—' सुदंसणा ! विणयमूले धम्मे पन्नत्ते " इति, विनयश्च प्रायः सत्प्रकृतेरेव स्यात्, सुवर्णस्येव सर्वधातुष्वपि, तदुक्तम्—" को कुवलयाण गन्धं करेइ महुरत्तणं च उच्छूणं । लीलं वरहत्थीणं विणयं च कुलप्पसूआणं ? ॥ १ ॥ केनाञ्जितानि नयनानि मृगाङ्गनानां, को वा करोति रुचिराङ्गरुहान् मयूरान् । कश्चोत्पलेषु दलसन्नयमातनोति, को वा करोति विनयं कुलजेषु पुंसु ? ॥ २ ॥ " श्रुतज्ञानार्थिना च विशिष्य गुर्वादिविनये

प्रवर्त्तितव्यं, यतः—" ज्ञानामृतं गुरोः कृपादादातुमतलस्पृशः । धत्ते विनय एवायं, पादावर्त्तप्रगल्भताम् ॥ १ ॥ तथा—विणया नाणं नाणाओ दंसणं दंसणाओ चरणंपि । चरणाहिंतो मुक्खो मुक्खे सुक्खं अणाबाहं ॥ १ ॥ " विनयपूर्वमेव च गृहीतं श्रुतं सद्यः सम्यक् फलप्रदं भवति, न त्वन्यथा, अत्र ज्ञातमिदम्—

राजगृहनगरे श्रेणिकनृपोऽन्यदा श्रीवीरमुखज्ञातसतीत्वनिर्णयादिगुणतुष्टश्चेल्लणादेवीमाचष्ट–कं तत्रान्यराज्ञीभ्यो विशिष्टतरं प्रसादं सम्पादयामि ?, तयोक्तम्—एकस्तम्भं मे प्रासादं कारय, राज्ञा तदर्थमभयकुमार आदिष्टः, तेन वर्द्धकय आज्ञप्ताः, ते तद्योग्यविशिष्टकाष्ठार्थमटव्यां भ्रमन्तः सुलक्षणं बहलच्छायमभ्रंलिहं पुष्पितं फलितं महाशाखं महास्कन्धमेकं महाद्रुमं दृष्ट्वा हृष्टाः, चिन्तयाञ्चक्रिरे च—नूनमयं सदैवतस्तरुः, यतः—" यादृशं तादृशमपि, स्थानं निर्दैवतं नहि । किं पुनर्लक्षणोपेता, महीयांसो महीरुहाः ? ॥ १ ॥ " ततस्तच्छेदे माऽस्मत्स्वामिनो विघ्नो भूदिति तदधिष्ठायकाराधनार्थमुपोष्य तद्दिने गन्धधूपमाल्यादिभिरधिवास्य स्वस्थाने गताः, तद्भक्त्या तुष्टस्तदधिष्ठायकसुरो रात्रौ साक्षाद्भूयाभयकुमारायाभिदधे—अहं सर्वर्तुकपुष्पफलद्रुममण्डितनन्दनोपमानवनखण्डभूषितं परितः प्राकारपरिक्षिप्तमेकस्तम्भं प्रासादं करिष्यामि, मद्भवनोपरिस्थस्तरुरयं न छेद्यः, अभयेन तथा प्रतिपन्ने व्यन्तरोऽप्यचिन्त्यशक्तिः सद्य एव यथोक्तं तं विदधे, यतः—" अधिकाः किङ्करेभ्योऽपि, वाग्बद्धा देवयोनयः । " राजापि केवलसौधार्थी तादृग्वनखण्डमण्डितं तद्दृष्ट्वा क्षीरपाणे प्रक्रान्ते शर्करायोगं मेने, ततस्तत्र नृपादिष्टा चेल्लणा पद्महृदपद्मे पद्मेव सकलकालं लीलायते स्म, अन्यदा तत्पुरवासिन्या एकस्या मातङ्ग्या अकाले आम्रफलदोहद उत्पेदे, विद्यासिद्धस्य स्वपत्युश्चेल्लणोपवनात्तदानयनाय सा सनिर्बन्धमभिदधे, सोऽपि नृपाद्भृशं बिभ्यदप्यवनामन्या विद्य-

याऽऽम्रशाखां नमयित्वा यथेच्छमाम्राणि गृहीत्वोन्नामन्या विद्यया शाखां पश्चादुन्नमय्य च स्तेननाशं नंष्ट्वा गृहे याति, तदाह—" न किं कुर्यान्न किं दद्यात्, स्त्रीभिरभ्यर्थितो नरः ? । अनभ्रा यत्र हेषन्ते, शिरोऽपर्वणि मुण्डितम् ॥ १ ॥ " प्रातश्चेल्लणया सहकारतरुं लूनफलं दृष्ट्वा राज्ञो ज्ञापितं, राज्ञा चाभयाय भणितं—यस्येदृशी शक्तिः सोऽन्तःपुरेऽपि विप्लवं कुर्यादिति तं सप्ताहान्तः स्फुटीकुरु, नो चेत्तव चौरदण्डः, अभयस्तथा प्रतिपद्य स्तेनं सर्वतोऽप्यन्वेषमाणः क्वापि नागरिकादिबहुसमुदाये मिलिते वृद्धकुमारीकथाकथनधिया तं स्तेनं स्फुटीचकार ।

तद्यथा—वसन्तपुरे निर्द्धनजीर्णश्रेष्ठिसुता वृद्धकुमारी सुरूपा स्मरार्चार्थं पुष्पाण्यन्वहं चौरयन्त्येकदाऽऽरामिकेण धृता, तद्रूपात् क्षुब्धेन प्रार्थिता प्राह-कुमार्यस्म्यस्पृश्या, यतः—" अस्पृश्या गोत्रजा वर्णाधिका प्रव्रजिता तथा । नाष्टौ गम्याः कुमारी च, मित्रराजगुरुस्त्रियः॥ १ ॥ " तेनोक्तम्-तदूढया त्वया पूर्वं मत्पार्श्वे आगम्यं, सा तथा स्वीकृत्य गृहे प्राप्ता, क्रमाद् ऊढा निशि स्वप्रतिज्ञोक्तौ पत्याऽनुमता निर्गता, स्वर्णरत्नाभरणा पथि चौरै रुद्धा, सद्भावोक्तौ सत्यसन्धेयं वलमानाऽनुलुण्टयिष्यते इति मुक्ता, पुरः क्षुत्क्षामरक्षसा रुद्धा, तथैव मुक्ता मालिकमुपेता, अतिविस्मितेन तेन मातृवत्प्रणता मुक्ता च, व्याघुटन्ती तथैव रक्षसा चौरैश्च मुक्ता, सम्यगुक्त्या पत्युर्मान्या जज्ञे, इति कथां कथयित्वा अभयो जनान् पप्रच्छ-हे जना ! एषु कश्चतुर्षु दुष्करकारकः ?, तदेर्ष्यालुभिः प्रोचे-पतिः, क्षुधातुरै रक्षः, जारैर्मालिकः, चूतचौरेण तु चौरः, स तदैवाभयेन धृत्वा पृष्टः सद्भावं प्रोचे, तथापि राज्ञा रुष्टेन वधादेशे दत्ते अभयेनोक्तम्-एतस्माद्विद्याद्वयमपूर्वं पूर्वं गृह्यतां तदनु यथार्हं कार्यं, यतः—" बालादपि हितं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमां विद्यां, स्त्रीरत्नं दुष्कुलादपि ॥ १ ॥ " ततो राजा सिंहासनस्थ एव मातङ्गं पुर उपवेश्योन्नामन्यवनामनीरूपं विद्याद्वयं पठितुमारेभे, परं बहुवारं पाठेऽपि यदा हृदि कथमपि न तिष्ठति

आ० प्र० ज्ञानाचार. ॥१९॥

तदा क्रुद्धो धात्रीधवः, किं रे मय्यपि कूटं कुरुषे ? इति तमतर्जयत्, तदानीमभयोऽभ्यधत्त–देव ! विनयं विना विद्या न स्फुरति, तदेनं सिंहासने उपवेश्य स्वयमञ्जलिं बद्ध्वा भुवि निविश्यतां, " प्रागात्मा विनये योज्यस्ततो विद्यां तु शिक्षते । यद्विद्या विनयादेव, वर्द्धते वल्लिवज्जलात् ॥ १ ॥ " इति नीतिशास्त्रं स्मरन्नृपोऽपि विद्यार्थी तथा चक्रे, ततस्ते सपदि हृदि लिखिते इव स्थिते, विद्यागुरुत्वाच्चौरोऽपि राज्ञा मुक्तः सत्कृतश्च, तस्माद्विनयपूर्वकं श्रुताध्ययनादि विधेयमिति ॥ व्याख्यातो द्वितीयो विनयाचारः ॥ २ ॥

तथा—श्रुतार्थिना गुर्वादिषु बहुमानः कार्यः, बहुमानश्च अभ्यन्तरः प्रीतिप्रतिबन्धः, तस्मिन् सति हि गुर्वादीनामेकान्तेन छन्दोऽनुवृत्तिगुणग्रहणदोषाच्छादनाभ्युदयचिन्तनाद्येव कुर्यात्, तद्दोदूयायां च स्वल्पायामपि स्वयमत्यन्तं दूयते, तदभ्युदये चात्यन्तं हृष्यति, विनयस्तु प्रागुक्तबाह्योपचारभक्तिरूपः, तस्मिंश्च सति बहुमानः स्याद्वा नवा, बहुमानं विना च किं विनयेन बहुनाऽपि ?, जीवं विना किं देहेन ? वित्तं विना किं गेहेन ? नक्रं विना किमाननेन ? दानं विना किं माननेन ? गन्धं विना किं कुसुमेन ? रङ्गं विना किं कुङ्कुमेन ? नीरं विना किं सरोवरेण ? दानं विना किं करेण ? प्रतिमां विना किं विहारेण ? नायकमणिं विना किं हारेण ?, तस्माद्विनयाद्बहुमानस्य प्राधान्यं, तत एव च विनयाचाराद्बहुमानाचारः पृथगुक्तः । श्रुतार्थिना चोभयमाश्रयणीयं, यत्परमार्षम्—" निद्दाविगहापरिवज्जिएहिं गुत्तेहिं पंजलिउडेहिं । भत्तिबहुमाणपुव्वं उवउत्तेहिं सुणेअव्वं ॥ १ ॥ विणओणएहिं कयपंजलीहिं छंदमणुअत्तमाणेहिं । आराहिओ गुरुजणो सुअं बहुविहं लहुं देइ ॥ २ ॥ " विनयबहुमानयोश्चतुर्भङ्गी यथा—कस्यचिद् विनयो न तु बहुमानः श्रीनेमिजिनं प्रति वासुदेवपुत्रस्य पालकस्येव१ कस्यचिद्बहुमानो न तु विनयः शाम्बस्येव२ कस्यचिद् द्वावपि गौतमस्येव श्रीवीरजिनं प्रति३ कस्यचिन्नैकोऽपि कपिलाकालशौकरिकादेरिव ४बहुमानं

व० मा० स्वरूपम् ॥१९॥

विना बहुनाऽपि विनयेन गृहीता विद्या फलदा न स्यात् । बहुमाने सति तु स्वल्पेनापि विनयेन फलदा स्यात्, श्रीगौतमपृच्छायामप्युक्तम्—" विज्जा विन्नाणं वा मिच्छाविणएण गिण्हिउं जो उ । अवमन्नइ आयरियं सा विज्जा निष्फला तस्स ॥ १ ॥ बहु मन्नइ आयरियं विणयसमग्गो गुणेहिं संजुत्तो । इअ जा गहिआ विज्जा सा सफला होइ लोगंमि ॥ २ ॥ " अत्र नैमित्तिकद्वयनिदर्शनम्–तद्यथा—एकस्य सिद्धपुत्रस्य द्वौ शिष्यौ, द्वावपि विनयप्रतिपत्त्यादि कुरुतः, परं गुर्वादावेकस्य सम्यग् बहुमानोऽन्यस्य तु न तथा, द्वावप्यष्टाङ्गनिमित्तं शिक्षितौ तत्कुशलौ जातौ, अन्यदा तौ तृणकाष्ठार्थं जग्मतुः, मार्गे पदसङ्क्रमं दृष्ट्वैकेनोक्तम्-अग्रे हस्ती याति, अन्येनोक्तम्-इयं हस्तिनी ननु हस्ती, साऽपि वामेऽक्षिग काणा, तस्यां स्त्रीपुंसावारूढौ स्तः, स्त्री च गुर्विण्यासन्नप्रसवा रक्तवस्त्रपरिधाना च, सा च सद्यः पुत्रं प्रसविष्यते, द्वितीयेनोक्तम्-किमेवमदृष्टमसम्बद्धं भाषसे ?, तेनोक्तम्—' ज्ञानं प्रत्ययसार 'मित्यग्रे सर्वं ज्ञास्यते, ततस्तौ यावत्कियती भुवं गतौ तावत्सर्वं तथैव दृष्टं, स्त्रियाः प्रसवभवनहेतुना वल्लिगहनान्तःस्थितत्वेन शीघ्रं मिलितत्वात्, यावत्तत्र क्षणं स्थितौ तावत्तया पुत्रः प्रसूतः, ततः कथमनेन एतावज्ज्ञातमिति द्वितीयो विस्मितः । किमपि मया न ज्ञातं इति खिन्नश्च । तदनु तौ नद्यास्तीरे गतौ, तदैका वृद्धा जलमाहर्तुं तत्रागता, तस्याश्च पुत्रो विदेशे गतो बहुदिनेभ्योऽद्यापि नायातीति तया तौ पृष्टौ–कदा मम पुत्रः समेष्यति ?, एवं पृच्छन्त्या एव च तस्याः शीर्षाद् घटः पतितो भग्नश्च, तदैकेन मन्दबुद्धिनोक्तम्–तज्जाएण य तज्जायं, तण्णिभेण य तण्णिभं । तारूवेण य तारूवं, सरिसं सरिसेण निद्दिसे ॥ १ ॥ इति निमित्तशास्त्रोक्त्यनुसारेण तव पुत्रो मृतः, अन्येनोक्तम्–मैवं वादीः, पुत्रो गृहे आगतः, याहि वृद्धे ! शीघ्रं स्वगेहे, मा मुधा पतः सन्देहे, सा प्रमुदिता त्वरितमेव गृहे गता, दृष्टः पुत्रः सस्नेहं मिलितश्च । इतस्तौ शिष्यौ यावद्गुरुपार्श्वे आगतौ तावद्वृद्धया बहु द्रव्यं धौतिकयुगलं च गृहीत्वाऽऽगत्य अवितथनिमित्तवादी

सत्कृतः, द्वितीयो गुरुं प्रति स्पष्टः सन्नाचष्ट—निरुपमज्ञानदृशा सर्वं विदन्तोऽपि भवादृशा अपि सुविनीतयोरपि स्वशिष्ययोर्यद्येव-मन्तरं कुर्वन्ति तदा किं कस्य कथ्यते?, कस्याग्रे चैतदुपालम्भप्रदानमपि प्रथ्यते?, यद्यमृतांशोरप्यङ्गारवृष्टिः सहस्रांशोरपि तमःसृष्टिः देवततरोरपि दारिद्र्यकथा चन्दनतरोरपि दुर्गन्धप्रथा अमृतादपि विषावेगोद्रेकः सज्जनादपि दौर्जन्यातिरेकः सद्वैद्यादपि मान्द्यसम्भवः पानीयादपि च प्रदीपनप्रभवः स्यात्तदा कस्य दोषो दीयते?, गुरुणोक्तं—कस्मादेवं ब्रूषे?, न हि मया त्वं विद्या-प्रदानाम्नायकथनादौ क्वापि वञ्चितोऽसि, तेनोक्तम्—तर्हि कथमनेन मार्गे हस्तिन्यादिस्वरूपं सम्यग् ज्ञातं न तु मया?, गुरु-र्जगौ—हंहो सद्बुद्धे! कथय कथं त्वयेदं सम्यग् विदितं?, सोऽप्यूचे—तव प्रसादादेव तथा तथाऽभिज्ञानविमर्शादिना, तत्र हस्तिनी कायिक्यभिज्ञानेन वामाक्षिकाणत्वं दक्षिणत एवान्तराऽन्तरा मुखं प्रक्षिप्य तृणभक्षणेन, स्त्रीपुंसौ कायिक्यभिज्ञानेनैव, आसन्न-प्रसवत्वं हस्तद्वयावष्टम्भोत्थानेन, तरुलग्नतन्तुभिः परिधानवस्त्रस्य रक्तत्वं, पुत्रोत्पत्तिसम्भवः स्त्रिया दक्षिणचरणगौरवस्य मार्गे ज्ञायमानत्वेन। वृद्धापुत्रस्य गृहागमनं तु घटस्य भूमेरुत्पन्नस्य भूमेर्मिलनेन। तदप्रतिमप्रतिभाप्रमुदितेन गुरुणा न्यगद्यत द्वितीयः-वत्स! विविधविनयकरणेऽपि तव मयि तादृग् बहुमानो न, एतस्य तु सम्यग् बहुमानः, वैनयिकीबुद्धिश्च सम्यग्बहुमान-गर्भविनयादेव स्फुरति, ततो ममात्र न कश्चिद्दोषः ॥ इति विनयबहुत्वेऽपि बहुमानाबहुमानदृष्टान्तः ॥

स्वल्पेऽपि विनये बहुमानेन फलप्राप्तौ दृष्टान्तो यथा—क्वापि गिरिनिर्झरे शिवमूर्त्तिः सप्रत्यया, तां द्विजः शुचिश्चन्दन-पुष्पाद्यैर्बहुभक्त्याऽर्चति, पुलिन्द्रस्तु धनुःशरव्यग्रैककरश्चरणेन प्राक्तनपूजामपास्य निरुपचारं गण्डूषजलेनाच्छोट्य बिल्वपत्रैरर्चति, शिवश्च मौग्ध्यात्तादृग्विनयं कर्त्तुमजानानस्य तस्य हार्दबहुमानादेव तुष्टस्तेन सह कुशलप्रश्नाद्यालापं कुरुते, द्विजोऽन्यदा तद्दृष्ट्वा रुष्ट-स्त्वमपीदृश एव नीचोऽसीति शिवमुपालब्धवान्, शिवोऽवादीद्—एष मयि दृढमनुरक्तः, प्रातस्त्वमपि स्वयं ज्ञास्यसि, द्विज-

हिज्जा लहुत्तं च आणेइ, ता तस्स केवलं धम्मकहाए गोयमा! भत्ती समुप्पाइज्जइ, तओ नाऊणं पिअधम्मं दढधम्मं भत्तिजुत्तं ताहे जावइअं पच्चक्खाणं निव्वाहेउं समत्थो भवइ तावइअं काराविज्जइ, राईभोअणं च दुविहं तिविहेण चउव्विहेण वा जहासत्तीए पच्चक्खाविज्जइ, गोयमा! णं पणयालाए नमुक्कारसहिआणं चउत्थं चउवीसाए पोरिसीहिं बारसहिं पुरिमड्ढेहिं दसहिं अवड्ढेहिं छहिं निव्विइएहिं चउहिं एगठाणगेहिं दोहिं आयंबिलेहिं एगेणं सुद्धच्छायंबिलेणं, अवावारत्ताए (अट्ट) रोद्दज्झाणविगहाविरहिअस्स सज्झाए एगचित्तस्स एगमेवायंबिलं मासखमणं विसेसिज्जा, तओ अ जावइअं तवोवहाणगं वीसमंतो करिज्जा तावइअं अणुगणेऊणं जाहे जाणिज्जा-जहा णं इत्तिअमित्तेणं तवोवहाणेणं पंचमंगलस्स जोगीभूओ ताहे आउत्तो पढिज्जा, न अण्णहत्ति। से भयवं! पभूअं कालाइक्कमं एअं जइ कज्जइ अंतराले पंचत्तमुवगच्छे तओ नमुक्कारविरहिए कहं मुत्तिमट्ठं साधिज्जा?, गोअमा! जंसमयं चेव सुत्तोवयारनिमित्तेणं असढभावत्ताए जहासत्तीए किंचि तवमारभिज्जा तंसमयमेव तदहीअसुत्तोभयं दट्ठवं, जओ णं सो तं पंचनमुक्कारं सुत्तत्थोभयं न अविहीए गिण्हे, किंतु तहा गिण्हे जहा भवंतरेसुंपि ण विप्पणस्से, एअज्झवसायत्ताए आराहगो भविज्जा, से भयवं! जेण उण अन्नेसिमहीयमाणाणं सुआवरणखओवसमेण कण्णहाडित्तणेणं पंचमंगलमहिअं भविज्जा सेऽवि अ किं तवोवहाणं करिज्जा?, गोअमा! करिज्जा, से भयवं! केणं अट्ठेणं?, गोअमा! सुलभबोहिलाभनिमित्तेणं, एवं चेआइं अकुव्वमाणे नाणकुसीले णेए " इति॥ ननु श्रीआवश्यके नमस्कारस्य सामायिकाङ्गतया भणितस्य महानिशीथे महाश्रुतस्कन्धत्वं भण्यमानं कथं युक्तम्?, उच्यते, यथा आवश्यकप्रथमाध्ययननिर्युक्तौ पृथगधिकृतं सामायिकं पृथगध्ययनमुच्यते, तदेव चतुर्थाध्ययने प्रतिक्रमणाख्ये प्रतिक्रमणसूत्रैकदेशतया दृश्यते ' इआणिं सुत्ताणुगमो जाव इमं च तं सुत्तं ' करेमि भंते ' इत्यादि तच्चूर्णिवचनात्, एवं नमस्कारोऽपि यदा सामायिकादौ भण्यते तदा सामायिकाङ्गं, यदा तु शयनासननिर्जराकार्यादौ

स्तदवज्ञाय गृहं गतः, प्रातः शिव एकं स्वचक्षुरुत्खन्य तस्थौ, द्विजस्तथा तं दृष्ट्वा किञ्चित्खेदं कृत्वा स्थितः, पुलिन्दस्तु अत्यन्तं दूनो भल्लूया स्वचक्षुरुत्खाय शिवाय ददौ, स च तुष्टस्तस्मै चक्षू राज्यं च प्रददे। हार्दबहुमानेनैव हि गुरवो देवादयश्च तुष्यन्ति, जिनस्तुतावप्युक्तम्—" तुममच्छीहिं न दीससि नाराहिज्जसि पभूअपूआए। किंतु गुरुभत्तिराएण वयणपरिपालणेणं च ॥ १ ॥ " तद् दृष्ट्वा द्विजोऽपि चित्ते चमचक्रे इति बहुमानाबहुमानयोः फलं विभाव्य विवेकिना गुर्वादीनां सम्यग् बहुमाने यतनीयमिति व्याख्यातस्तृतीयो बहुमानाचारः ३ ॥

तथा श्रुतार्थिनोपधानं यथाविधि विधेय, उपधानं च श्रुताराधनार्थं यथोद्दिष्टस्तपोविशेषः, उप-समीपे धीयते—क्रियते सूत्रादिकं येन तपसा तदुपधानमिति व्युत्पत्तेः; तच्च साधूनामावश्यकादिश्रुताराधनार्थमागाढानागाढयोगरूपं सिद्धान्ताविरोधि स्वस्वसामाचार्यनुसारेण ज्ञेयं, श्राद्धानां तु श्रीमहानिशीथाद्यागमोक्तं पञ्चपरमेष्ठिनमस्कारादिसूत्राराधनार्थमुपधानषट्कं प्रतीतमेव, साधूनां योगोद्वहनं विना यथा सिद्धान्तवाचनभणनादि न शुद्ध्यति तथोपधानतपो विना श्राद्धानामपि नमस्कारादिसूत्रभणनगुणनादि न शुध्यति, यदुक्तं श्रीमहानिशीथे अकालाविनयाबहुमानानुपधानाद्यष्टविधज्ञानकुशीलानां मध्येऽनुपधानकुशीलस्य महादोषत्वं, यथा—' अट्ठण्हंपि एआणं गोअमा ! जे केइ अणुवहाणेणं सुपसत्थं नाणमहीअंति अज्झावयंति वा अहीअंते वा अज्झावयंते वा समणुजाणंति ते णं महापावकम्मा महतीं सुपसत्थनाणस्सासायणं पकुव्वं त, से भयवं ! जइ एवं ता किं पंचमंगलस्स णं उवहाणं कायव्वं ?; ' पढमं नाणं तओ दया ' दयाए अ सव्वजगज्जीवपाणभूअसत्ताणं अत्तसमदरिसित्तं जाव सव्वुत्तमसोक्खंति ता सव्वमेवेअं नाणाओ पवत्तिज्जा जाव गोयमा ! इमाए विहीए पंचमंगलस्स णं विणओवहाणं कायव्वं तंजहा—सुपसत्थे चेव तिहिकरणमुहुत्तणक्खत्त-

पृथक् स्मर्यते तदाऽन्यः श्रुतस्कन्धः, महानिशीथस्य चान्यश्रुतेभ्यो विशिष्टतरश्रुतत्वं दृश्यते, तद्योगस्य संलग्नपञ्चचत्वारिंशदाचामाम्लरूपस्यागाढस्यान्ययोगेभ्यो दुस्तपतपोरूपत्वेनोत्कृष्टत्वात्। एवं सत्यपि ये महानिशीथस्य प्रामाण्य न मन्यन्ते न विद्मस्तेषां का गतिः ?, श्रुतापलापस्य महापापहेतुत्वात्, न च तस्य श्रुतत्वमेव सन्दिग्धमिति मुग्धबुद्धिभिरभिधेयं, नन्दिसूत्रपाक्षिकसूत्रादौ ' निसीहं महानिसीह'मिति साक्षात्तस्योक्तत्वात्, न चेदं तत्र भवतीत्यपि वाच्यं, तथा सति श्रीआचाराङ्गौपपातिकादिग्रन्थानामप्यधुना वर्त्तमानानां नन्दिसूत्राद्युक्तेभ्योऽन्यत्वप्रसङ्गो दुर्निवारः, एवं चासमीक्ष्यभाषणेन आशातनाकारिणां जिनादिष्वपि यत्तद्वचनीयतायां न कश्चिदविषयः। किञ्च-येऽप्यनन्तसंसारदुस्सहदुःखेभ्योऽप्यभीततया कदाग्रहात् महासाहसिकतामवष्टभ्य महानिशीथं न प्रमाणीकुर्वन्ति तैरपि उपधानतपः प्रतिपत्तव्यं, चतुर्दशपूर्वधरश्रीभद्रबाहुस्वामिप्रणीतश्रीदशवैकालिकनिर्युक्त्यादौ ' काले विणए बहुमाणे उवहाणे ' इति गाथायामनन्तरोदितायां तस्य साक्षादुक्तत्वात्, समवायाङ्गेऽपि उपासकदशाङ्गस्वरूपप्ररूपणाधिकारे साक्षादेव श्रावकाणामुपधानान्यभिदधिरे, यथा—" उवासगाणं च सीलव्वयवेरमणगुणपच्चक्खाणपोसहोववासपडिवज्जणयाउ सुअपरिग्गहा तवोवहाणाइं पडिमाओ " इति। अत्र वृत्त्येकदेशो यथा—" श्रुतपरिग्रहास्तपउपधानानि प्रतीतानि। " व्यवहारवृत्तावपि यथा—" श्रुतग्रहणमभीप्सता उपधानं कार्य"मिति। यैश्च श्राद्धानामुपधानविधिर्न मन्यते तैः साधूनां योगविधिः किमिति मन्यते ?, श्राद्धवत्साधूनामपि योगोद्वहनं विनापि सूत्रपाठादिशुद्ध्यापत्तेः, ततः कदाग्रहग्रहग्रस्ततां परिहृत्य सिद्धान्तमार्गानुयायितां चानुसृत्य यथोक्तमहाश्रुतस्कन्धाध्ययनादिपरिभाषोपेतनमस्कारादिसूत्राराधनाहेतुभूतान्युपधानानि जिनवचनप्रामाण्यात् प्रमाणतया प्रतिपत्तव्यानि। महानिशीथे चोपधानतपो विना नमस्कारादिसूत्रपठनादि निषिद्धं, सम्प्रति तु द्रव्यक्षेत्रकालाद्यपेक्षया लाभालाभ विभाव्याऽऽचरणयोपधानतपो विनाऽपि

सूत्रपाठादि कार्यमाणं दृश्यते, आचरणायाश्च लक्षणमिदं कल्पभाष्ये—" असढेण समाइण्णं जं कत्थय केणई असावज्जं । न निवारिअमन्नेहिं बहुमणुमयमेअमायरिअं ॥ १ ॥ " आचरणा च जिनाज्ञासमानैव, यदु भाषितं भाष्यादौ—" असढाइण्णऽणवज्जं गीअत्थअवारिअंति मज्झत्था । आयरणावि हु आणत्तिवयणओ सुबहु मन्नंति ॥ १ ॥ " परं येन प्राग् नमस्कारादिसूत्राण्यधीतानि तेनापि यथायोगं निर्विलम्बमेवोपधानानि यथाशक्ति तपसा पोषधग्रहणादिविधिनाऽवश्यं वहनीयानि, महानिशीथेऽपि मुख्यपदे आचामाम्लोपवासरूपं द्वितीयपदे च यथाशक्त्यपि तपः प्रोक्तं, तेन " शक्तितस्त्यागतपसी " इत्युक्तेश्च तपसि न कश्चिदाग्रहः ?, पोषधग्रहणक्रिया तु यद्यपि महानिशीथे साक्षान्नोक्ता तथापि यथा साधोर्योगेष्वतिशायिक्रियावत्त्वं सर्वप्रतीतं तथा श्राद्धानामप्युपधानेषु विलोक्यते, तच्च निरारम्भत्वादिगुणैरेव, ते च सम्यक् पौषधस्वीकारे एव स्युः, नान्यथा, बहुषु प्राक्तनप्रकरणेषु चिरन्तनाचार्यप्रणीतसम्प्रदायायातस्वस्वगच्छसामाचार्यादिषु चोपधाने पौषधस्वीकारः साक्षादप्युक्तः, योगविधिरपि स्पष्टतया सामाचार्यादिष्वेव दृश्यते, न तु क्वापि सिद्धान्ते साक्षात्, ततः श्राद्धानामुपधानेषु पौषधग्रहणादिविधिर्योगविधिवत् प्रमाणयितव्यः । तदेवं साधुभिः श्राद्धैश्चोपधानतपोऽवश्यकृत्यतया समस्तान्यतपोभ्यः प्रथममेव सम्यगाराध्यं । निर्वाहार्थं बहुगृहकृत्यादिवैयग्र्येण प्रमादादिना वा ये उपधानं नोद्वहन्ते तेषां नमस्कारगुणनदेववन्दनेर्यापथिकीप्रतिक्रमणादि जन्ममध्ये कदापि न शुध्यतीति, भवान्तरे तेषां तल्लाभोऽपि दुस्संभवो, ज्ञानविराधकाणां ज्ञानदुष्प्रापतायाः प्रतीतत्वात्, तेन ज्ञानाराधनार्थिभिरुपधानविधौ सर्वशक्त्या यतनीयं । तत्र प्रथमं साधूनामुपधानविषये कथानकं,



यथा—गङ्गातीरे सूरिरेकः प्रभूतशिष्यनिरन्तराध्यापनप्रश्नोत्तरप्रदानादिना रात्रावपि विश्राममलभमानः स्वभ्रातरं सहदीक्षितं स्वल्पश्रुतं स्वरवृत्त्या निद्रादिसुखिनं दृष्ट्वा ज्ञानेऽनादरी विश्रामाय स्वाध्यायेऽप्यस्वाध्यायिकं घोषयति, तं च ज्ञाना-

तिचारमनालोच्य सौधर्मे सुरीभूयाभीरकुलेऽवतीर्णो भोगादिभिः सुखीजज्ञे, असौ अन्यदा स्वपुत्रीमतिरूपवतीं गन्त्र्यामग्रे निवेश्य घृतं विक्रेतुं नगरं प्रति प्रतस्थे, तेन सह बहुभिराभीरतरुणैस्तत्कन्यारूपनिरूपणपरवशैः स्वस्वशकटान्युत्पथे प्रेरितानि भग्नानि, कियन्मात्रं वा रूपमसक्तानामेतत् ?, यत्परमार्षम्—" रूवेसु जो गिद्धिमुवेइ तिव्वं, अकालिअं पावइ से विणासं। रागाउरे से जह वा पयंगे, आलोअलोले समुवेइ मच्चुं ॥ १ ॥ " ततस्तैर्दूनैस्तस्या अशकटेति तत्पितुश्चाशकटापितेत्यपनाम दत्तं, स तद्वैराग्यात्स्वपुत्रीं कस्मैचिद्दत्त्वा प्रव्रजितः उत्तराध्ययनत्रयं यावत् श्रुतमध्यगीष्ट, तुर्येऽसङ्ख्येयाध्ययने उद्दिष्टे प्राक्तनज्ञानान्तरायकर्मोदयादाचामाम्लाभ्यां दिनद्वयं पठनेऽपि पदमात्रमपि हृदि न स्थितं, ततो गुरुभिरुक्तम्—अनुज्ञापयासङ्ख्येयाध्ययनं, तेन पृष्टं—कोऽत्र मुख्यो विधिः ?, गुरुभिरादिष्टं-यावदिदं नायाति तावदाचामाम्लतपः क्रियते, तेन सोत्साहतया तथैव चक्रे, एवं द्वादशवर्षैराचामाम्लानि कुर्वता द्वादश श्लोकान्यधीतानि, ततस्तत्कर्मक्षयात्सुखेनैव शेषमशेषमपि श्रुतमध्यैष्ट, एवं यतिभिर्योगविधिः सम्यगाराध्यः।

अथ श्राद्धानामुपधानविषये आख्यानकं, यथा—चम्पापुरि परमार्हताजितदासश्रेष्ठिनस्तनयौ द्वौ ऋषभदत्ताजितदत्ताख्यौ, पित्रा शिशुत्वेऽपि नमस्कारादिसूत्रपाठं कारितौ, यावत् पौषधतपोयोग्यौ जातौ तावत् पित्रोक्तं-वत्सौ ! सम्यक् सूत्राराधनार्थमुपधानतपो विधत्तां चित्तैकाग्र्येण, यतः-" विहिसारं चिअ सेवइ सद्धालू सत्तिमं अणुट्ठाणं। दव्वाइदोसनिहओऽवि पक्खवायं वहइ तंमि ॥ १ ॥ आसन्नसिद्धिआणं विहिपरिणामो उ होइ सयकालं। विहिचाउ अविहिभत्ती अभव्वजिअदूरभव्वाणं ॥ २ ॥ " तदाकर्ण्य सकर्णाग्रणीर्लघुरप्यलघुधीरिष्टं वैद्योपदिष्टं चेति मन्वानः सानन्दं नन्दिमहोत्सवादिविधापनपूर्वमपूर्वबहुमानगर्भमुपधानतपांसि मुख्यविधिनैवोद्वहति स्म, वृद्धस्तु सांसारिकरसगृद्धः पौषधोपवासादिक्रियादौष्कर्यमानी समानीतनि-

ह्रींकृतादिसाहसः सूत्राणि तु प्रामण्यस्खलितान्यधीतानि मुधा किमतः परं दुस्तपतपस्तपनादिक्लेशावेशाश्रयणेन ?, यतः- “ अतिक्लेशेन ये ह्यर्था, धर्मस्यातिक्रमेण च । शत्रूणां प्रणिपातेन, ते ह्यर्था मा भवन्तु मे ॥ १ ॥ ” एवमुपधानावधीरणाधुरीणः प्रवीणमातापितृभ्रात्रादिभिर्बहुबहु प्रेरणेऽपि गलिबलीवर्द इव धुर्यभारं कथमपि नोपधानं वहति स्म । धिग् धिग् धर्मिष्ठानामपि प्रमादमदिरामेदुरमदोद्रेकावेशविसंस्थुलत्वं, यत्सम्यग्धर्मविधिविदग्धा अपि वह्निदग्धा इव नोत्तिष्ठन्ते तदाराधनार्थम् । एवं तेनोपधानानुद्वहनकिञ्चित्तदवहीलनादिना ज्ञानावरणीयकर्म श्राद्धधर्माराधनेऽपि तीव्रं बद्धं, द्वावपि च श्राद्धधर्माराधनेन सौधर्मे सुपर्वभूयमनुभूय तत्रश्च्युतौ महाविदेहे इभ्यकुलेऽवतीर्णवन्तौ, यमलजातौ सुतौ जातौ देवदत्तगुरुदत्तनामानौ, परं प्राक्तनस्य प्राक्तनकर्मदोषेणातिमूर्खत्वनिर्बुद्धित्वादि जज्ञे, द्वितीयस्य चातिप्राज्ञत्वसुबुद्धित्वादि, क्रमाद्द्वावपि पित्राऽध्यापयितुमध्यापकस्यार्पितौ, आद्यस्य बहूपक्रमेऽपि वर्णमात्रमपि न हृदि तिष्ठति उदकबिन्दुरिवातितप्तपात्रे, किं बहुना ?, वर्णानां वाचनलिखनाद्यपि काष्ठपुत्रक इव लेशतोऽपि नाज्ञासीत्, पित्रादिभिर्विविधौषधमन्त्रतन्त्रयन्त्रदैवतप्रश्नाद्यनेकोपायकरणेऽप्यहर्निशं पाठनेऽपि च नमस्कारपदमात्रमपि नापाठीच्च, द्वितीयस्तु हार्दपरिज्ञानेन बृहस्पतिरिव द्वितीयः स्वल्पैरेव दिवसैः सुखेनैव सकलशास्त्राब्धिपारीणतया सर्वान्तर्वाणिशिरोमणिभावमावहन् क्रमात्सम्यक् श्राद्धधर्मसमग्रविधिशिक्षणोत्सर्गापवादविदुरत्वादिना श्रीजिनशासने निस्तुलं कौशलं लेभे, अहो ज्ञानविराधनाराधनयोरनिर्वाच्यः कोऽपि विपाकपरिपाकः ?, ततस्तौ यथाक्रमं स्वर्भाणुतिग्मभानुकडहल्लकशीतभानुनिशादिवसामावास्यापूर्णिमाऽङ्गारककनकधत्तूरकचम्पककरीरकल्पद्रुममपीदुग्धकाककोकिलबकमरालकलियुगकृतयुगदुर्जनसज्जनखरकरीन्द्राद्युपमानानि लोके लब्धवन्तौ, अहो सहोदरत्वेऽपि विषामृतयोरिव महत्तरमन्तरमेतयोः, ततो दुर्दैवकृतेन परिस्कृतभेदेनात्युद्विग्नतानिमग्नचित्तो देवदत्तः सुदुस्सहदुःखाद्वैतमन्तर्वहतीति । अन्यदा जनकेन

निजतनुजयोः प्राग्भवे पृष्टे ज्ञानिना यथास्थिते आदिष्टे स्वाशयेऽनुशयं सातिशयं प्रकाशयता मुक्त्यैकचित्तेन देवदत्तेन स्वकदुष्कर्मक्षयोपायमादिशेतिविज्ञप्तो ज्ञानी न्यगादीत्–हंहो उपधानवाहिनां नमस्कारादिसूत्रपाठिनां चाशठतया विनयावर्जनभोजनविश्रामणादिवैयावृत्त्यादिभिः सर्वाङ्गीणभक्तिपोषं संतोषोपवासाचामाम्लादिदुस्तपतपोभिः स्ववपुःशोषं च महर्षिरिव यदि करिष्यसि तदैव इदं दुष्कर्म क्षयं यास्यति, न त्वन्यथा, यत्परमर्षयः–" पावाणं च खलु भो ! कडाणं कम्माणं पुव्विं दुच्चिन्नाणं दुप्पडिक्कंताणं वेइत्ता मुक्खो, नत्थि अवेइत्ता, तवसा वा झोसइत्ता " इति, तथा " अनिआणस्स विहीए तवस्स तवित्रस्स किं पसंसामो ? । किज्जइ जेण विणासो निकाइआणंपि कम्माणं ॥ १ ॥" ततस्तेन महेभ्यपुत्रेणापि शिशुनाऽपि सुखिनाऽपि च तत्तथैवाशेषं सविशेषं बहूनि वर्षाणि सोत्साहतयैव विदधे, ततस्तत्कर्म निबिडमपि काष्ठमिव प्रगुणघुणगणयोगे शनैः शनैरनिनिडीभूतं, तदनु महानिशीथोक्तगुरूक्तविधिनैव स सावधानमना उपधानवहनपूर्वं नमस्कारादिसूत्राणि पपाठीति स्म, एवं प्राक्कृतदुष्कर्मणि सर्वथा क्षीणे समग्रशास्त्रपारीणतया देवदत्तोऽपि गुरुदत्तोपमितिं प्राप्नोति स्म, तद् दृष्ट्वा जातश्रद्धाः प्रायः सर्वेऽपि श्राद्धा उपधानविधिमाराधयन्ति स्म, ततस्ताभ्यां परमार्हताभ्यां तथा ज्ञानमाराधयामाहे यथा तद्भवेऽपि द्रव्यदीक्षाकक्षीकारमन्तरेणापि केवलज्ञानमवाप्य सिद्धिसौधमध्यासामाहे, इत्थमुपधानाराधनानाराधनयोः फलमाकलय्य प्रमादमवगणय्य तदाराधनविधौ सम्यग्यतितव्यं, इति श्राद्धोपधानविषये ज्ञातं । इतिव्याख्यातश्चतुर्थ उपधानाचारः ॥ ४ ॥

तथा—गृहीतश्रुतेन गुरुश्रुतादेरनिह्नवः कार्यः, यस्य सकाशेऽधीतं स एवाप्रसिद्धोऽपि जातिश्रुतादिहीनोऽपि गुरुतया वाच्यो, नतु स्वस्य गौरवार्थं प्रसिद्धो युगप्रधानादिरन्यः, यावद्वा श्रुतमधीतं तावदेव वक्तव्यं, न त्वधिकमूनं वा, मृषाभाषाचित्तकालुष्यज्ञानातिचाराद्यापत्तेः, गुर्वाद्यपलापस्य महापापत्वं लोकेऽप्युक्तम्–"एकाक्षरप्रदातारं, यो गुरुं नाभिमन्यते । श्वानयोनिशतं गत्वा, चाण्डा-

लेष्वपि जायते ॥१॥" अत्रेदमुदाहरणम्—एको नापितः क्षुरगृहं विद्याबलाद्व्योम्नि निराधारं स्थापयति, तस्माद्बहुसेवया लब्धविद्य एकः परिव्राजक आकाशगतेन त्रिदण्डेन स्थाने स्थाने जनैः पूज्यमानोऽन्यदिने राज्ञा पृष्टः—कस्ते गुरुः ?, तेनोक्तं—हिमालयशैलाश्रयः फलाहारो महातपस्वी महर्षिः, तदा तदुक्तिसमकालमेव तस्य त्रिदण्डमुच्चैरुल्लालितदण्डवद्वियतः खडखडत्पपात, ततस्तस्योपहासापमानादि जनेऽजनीति गुरुनिह्नवः सर्वथा न विधातव्यो विशिष्य धर्मार्थिना इति विवृतः पञ्चमोऽनिह्नवाचारः ॥ ५ ॥

तथा व्यञ्जनार्थतदुभयैः शुद्धं सूत्रमध्येतव्यं, तत्र व्यञ्जयन्त्यर्थमिति व्यञ्जनानि—अक्षराणि तेषामन्यथाकरणे न्यूनाधिकत्वे वाऽशुद्धत्वेनानेके महादोषा महाशातना सर्वज्ञाज्ञाभङ्गादयः, तथा व्यञ्जनभेदेऽर्थभेदस्तद्भेदे च क्रियाभेदः क्रियाभेदे च मोक्षाभावः तदभावे च निरर्थकानि साधुश्राद्धधर्माराधनतपस्तपनोपसर्गसहनादिकष्टानुष्ठानान्यपि । तत्रान्यथाकरणं संस्कृतस्य सूत्रस्य प्राकृतीकरणं, यथा धर्मो मङ्गलमुत्कृष्टं १ पदानां व्युत्क्रमेण भणनं वा, यथा-उक्किट्ठं मङ्गलं धम्मो २ पदानां पर्यायैः परावर्त्तनं वा, यथा पुण्णं कल्लाणमुक्कोसं ३ वर्णान्तरकरणं वा, यथा-धम्मो इत्यत्र धस्य स्थाने ककारादि पठति ४ वर्णवैपरीत्यकरणं वा, यथा-देवात्रि इत्यस्य स्थाने विवादे इति भणति ५, एवं अर्थस्य व्यञ्जनार्थोभयस्य चान्यथाकरणे न्यूनाधिकत्वे च दोषा विभाव्याः, तत्र व्यञ्जनान्यथाकरणे चैत्यवन्दनादिसूत्राणां संस्कृतभाषया करोमीत्युक्त्यापि पाराञ्चिकप्रायश्चित्तं प्राप्तः श्रीसिद्धसेनदिवाकर उदाहरणम् । तद्वृत्तमेवम्—

विद्याधरगच्छे श्रीपादलिप्तसूरिसन्ताने स्कन्दिलाचार्याः साधितानेकसङ्घकार्या ग्रामानुग्रामं विहरन्तो गौडदेशे समवसृताः, तत्र कोशलाख्यग्रामवासी मुकुन्दो नाम वृद्धविप्रस्तेषां मिलितो देशनामेवं शुश्राव—विवेकिना सर्वदाऽपि सम्यग्धर्म

आराध्यो, विशिष्य च वृद्धत्वे, यतः—" बालेऽस्ति यौवनाशा स्पृहयति तरुणोऽपि वृद्धभावं च। मृत्यूत्सङ्गगतोऽयं वृद्धः किमपेक्ष्य निर्द्धर्मा ? ॥ १ ॥ स्याच्छैशवे मातृमुखस्तारुण्ये तरुणीमुखः। वार्द्धके तु पुत्रमुखो, मूढो नात्ममुखः क्वचित् ॥ २ ॥ ततः प्रबुद्धः प्रव्रज्यां प्रतिपद्य गुरुभिः सह विहरन् भृगुपुरे प्राप्तः, स मुकुन्दमुनिर्निश्यपि तारस्वरेण पठन्निद्राभङ्गेन साधून् दुर्मनायमानान् ज्ञात्वा गुरुभिर्निषिद्धो-यथा वत्स! नमस्कारान् गुणय, रात्रावुच्चैर्भाषणे हिंस्रजीवजागरणादनर्थदण्डोऽपि स्यात्, तथाप्युच्चैर्घोषयन् केनापि हसितः-किमनेन वयसा एवं पठन् मुसलं पुष्पयिष्यति ?, तच्छ्रुत्वा स खिन्नः सद्यो विद्यार्थी नालीकेरवसत्याख्यचैत्ये समवयां भारतीमाराध, एकविंशत्योपवासैः सा तुष्टा स्पष्टीभूयाचष्ट-सर्वविद्यासिद्धो भव, ततश्चतुष्पथे मुसलं प्रासुकजलैरभिषिच्य सद्यः प्रोल्लासिपल्लवं पुष्पयामास, उवाच च—पत्तमवलंविअं तह जो जंपइ फुल्लए न मुसलमिहं तमहं निराकरित्ता फुल्लइ मुसलंति ठावेमि ॥ १ ॥ तथा—मद्रोः शृङ्गं शक्रयष्टिप्रमाणं, शीतो वह्निर्मारुतो निष्पकम्पः। यस्मै यद्वा रोचते तत्र किञ्चिद्वृद्धो वादी भाषते कः किमाह ? ॥२॥" तत्राम्नैव वादिनो विदुद्रुवुर्वैनतेयनाम्ना नागा इव, ततो वृद्धवादीति विदितो गुरुभिः स्वपदे स्थापयामाहे। तदाऽवन्त्यां विक्रमादित्यो राजा सात्त्विकाग्रः परोपकारैकनिष्ठः सिद्धस्वर्णपुरुषद्वयो भुवोऽनृणीकरणादिना स्वसंवत्सरप्रवर्त्तयिता, तस्य कोशाध्यक्षं प्रति दानादेशकाव्यमिदं-" आर्त्ते दर्शनमागते दशशती सम्भाषिते चायुतं, यद्वाचा च हसेयमाशु भवता लक्षाऽस्य निश्राण्यताम् निष्काणां परितोषके मम पुनः कोटिर्मदाज्ञा परा, कोशाधीश ! सदेति विक्रमनृपश्चक्रे वदान्यस्थितिम् ॥ १ ॥ ' एकदा तेन नृपेण पानीये पानाय याचिते उचिताभिधायिना मागधेनाभिदधे-' वक्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते, बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं, स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते! [illegible] ॥२॥ ' [illegible]

दम्-' अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः, पञ्चाशन्मदगन्धलुब्धमधुपाः क्रोधोद्धुराः सिन्धुराः । लावण्योपचयप्रपञ्चितदृशां वाराङ्गनानां शतं, दण्डे पाण्ड्यनृपेण ढौकितमिदं वैतालिकस्यार्पितम् ॥ २ ॥ ' इत्यादिदानादिकृत्यानि तस्य प्रसिद्धानि, तस्य राज्ये मान्यः कात्यायनगोत्रवतंसो देवर्षिर्द्विजः, तत्पत्नी देवश्रीः, तयोः सूनुः सिद्धसेनाभिधानः, प्रज्ञानिधानतया जगदपि तृणवद्गणयति, मिथ्यादृशां गर्वस्य प्रकृतिसिद्धत्वात्, तदाह—" वृश्चिको विषमात्रेणाप्यूर्ध्वं वहति कण्टकम् । विषभारसहस्रेऽपि, वासुकिर्नैव गर्वितः ॥ १ ॥ " यो मां वादे जयति तस्याहं शिष्यः स्यामिति प्रतिज्ञा तस्य, स क्रमाद्वृद्धवादिनः कीर्त्तिं श्रुत्वा तामसहिष्णुस्तत्संमुखं सुखासनासीनः सञ्चरिष्णुर्यावद्भृगुपुरासन्नं गतस्तावद्भृगुकच्छान्निर्गतो वृद्धवादी प्राग मिलितः, परस्परमालापे संवृत्ते सिद्धसेनोऽवादीद्-वादं देहि, सूरिराह-दद्मः, परमत्र भाग्यलभ्याः केऽपि न सभ्याः, तान्विना वादे कथं जयपराजयव्यवस्था, वादार्थमुत्कण्ठुलेन गर्वोच्छृङ्खलेन तेन प्रोक्तम्-एते गोपालकाः सभ्या भवन्तु, गुरुभिरभाणि-तर्हि ब्रूहि यथेष्टं, ततः प्रमुदितः सुचिरमुच्चैःस्वरमुपन्यासे सुसंस्कृतेनानल्पं जल्पं चक्रे, क्रमात्तस्मिन् स्थिते गोपैरुक्तं-किमप्ययं न वेत्ति, केवलमुच्चैः पूत्कारं पूत्कारं कर्णौ नः पीडयति, वृद्ध ! त्वं किमपि ब्रूहि, ततो वृद्धवादी द्वेधापि समयवेदी पींदेणिच्छंदसा नृत्तनिमित्तमुत्तालतालदानपूर्वकमेदमवादीत्-' नवि मारिअइ नवि चोरिअइ, परदारह गमणु निवारिअइ । थोवा थोवं दाइयइ, टगिटगि सग्गिहिं जाइयइ ॥१॥ कालउ कंबल अनु नीवटु, छासिइं भरिउ दइअड निपटु । अइवड चडिउ नीलइ झाडि, अवर कि सरगह सिंग निलाडि ॥ २ ॥ " तच्छन्दसा नृत्यद्भिर्गोपैः प्रोच्चैः प्रीतैः प्रोचे-अनेन जितं, साक्षात्सर्वज्ञोऽयं, ततः सत्यप्रतिज्ञः सिद्धसेनस्त्यक्ताभिमानः प्रोवाच—भगवन् ! मां प्रव्राजय, तव शिष्योऽहं, वादे सभ्यसाक्षिकं जितत्वात्, अथ गुरुर्जगौ सगौरवं कोऽयमत्र वादे जयः ?, तेन भृगुपुरे प्रवीणप्रामाणिकप्रचुरे सप्रभे नृपसभे आवयोर्वादोऽस्तु, स प्राह—अहम-

समयज्ञस्त्वं तु समयज्ञः, यः समयज्ञः स सर्वज्ञः नष्टयैव जितं, दीक्षय मद्भुत्तु मां शिक्षय प्रशमरसमयं स्वसमयं, एवमादिवादिनं तं वादिनं वृद्धवादी तत्रैव दीक्षयामास, तं वृत्तान्तं ज्ञात्वा भृगुपुरनरेन्द्रस्तत्र तालारसं नाम ग्रामं महान्तं स्थापयामास कारयामास च कृतसुकृतिजनचित्ताह्लादं श्रीऋषभप्रासादं, तत्र प्रतिष्ठां श्रीवृद्धवादी विदधे, श्रीजिनमतं महत्त्वमायुन्नतिमादधे, सिद्धसेनस्य दीक्षाकाले कुमुदचन्द्रेतिनामासीत्, सूरिपदे पुनः सिद्धसेनदिवाकरेति नाम प्रथये अपरापरेभ्यः पूर्वपरेभ्यः पूर्वगतश्रुताध्येतृत्वेन, उक्तं च—" वाई अ खमासमणे दिवायरे वायगत्ति एगट्ठा । पुव्वे पुव्वगयंमी एए संद्दा पयट्टंति ॥ १ ॥" दिवाकरेति सूरेः संज्ञा स्वामिवाचकादिशब्दवत् । अथ श्रीसिद्धसेनदिवाकरः श्रीजिनमतोद्योतेनापि स्वनाम सार्थकीकुर्वाणः पृथ्व्यां विहरमाणः क्रमेणोज्जयन्यां संमुखागतसङ्घक्रियमाणातुच्छोत्सवैः सर्वज्ञपुत्रकेत्यादिवादिषु वन्दिषु चतुष्पथान्तरागच्छन् संमुखागच्छद्विक्रमादित्यनृपेण हस्तिस्कन्धाधिरूढेन सर्वज्ञपुत्रतापरीक्षार्थं मनसैव नमश्चक्रे, नतु शिरोनमनवचनाभ्यां, सूरिस्त्वासन्नायातस्तस्मै धर्मलाभं बभाण, तदानीं मेदिनीन्द्रः प्राह—हंहो सूरीन्द्रा ! अनमद्भ्योऽप्यस्मभ्यं धर्मलाभः कथं दीयते ?, किमयं सपर्यां लभ्यमानोऽस्ति ?, सूरिणा अभाणि—चिन्तामणिकोटिभिरपि दुर्लभोऽयं, त्वं च परीक्षार्थमस्मान् मनसैवानंसीस्तेन तुभ्यं धर्मलाभः प्रादायि, ततस्तुष्टो नृपश्रेष्ठो हस्तिस्कन्धादवरुह्य ववन्दे कनककोटिं चानाय्योपददे, गुरुभिर्निःसङ्गत्वाद्राज्ञापि कल्पितत्वादग्रहणे सङ्घपुरुषैर्जीर्णोद्धारादावुपयोज्यते स्म, दानवहिकायां त्वेवं लेख्यते स्म—" धर्मलाभ इति प्रोक्ते, दूरादुच्छ्रितपाणये । सूरये सिद्धसेनाय, ददौ कोटिं धराधिपः ॥ १ ॥

सोऽथ विहरन् विचित्रचित्रकूटं चित्रकूटं क्रमादटति स्म, तत्र चिरन्तनचैत्ये स्तम्भमेकं महान्तं दृष्ट्वा कश्चित्पृच्छति स्म—कोऽयं स्तम्भः ? किमयः ?, तेनोचे—पूर्वाचार्यैरिह रहस्यविद्यापुस्तकानि न्यस्तानि सन्ति, स्तम्भस्तु तत्तदौषधद्रव्यमयो वज्र·

घटित इव जलानलादिभिरभेद्यः, तदाकर्ण्य स सकर्णस्तस्य स्तम्भस्य गन्धं गृहीत्वा प्रत्यौषधरसैस्तमाच्छोटयामास, विचकास च स पक्ववालुङ्कवत्, ततस्तन्मध्यादेकं पुस्तकं छोटयित्वा वाचयन् प्रथमपत्रे प्रथमौल्यां द्वे महाविद्ये लभते स्म, एका सर्षपविद्या द्वितीया चूर्णयोगे हेमविद्या, तत्र सर्षपविद्या सा यथोत्पन्ने कार्ये मान्त्रिकोऽभिमन्त्र्य यावतः सर्षपान् जलाशये क्षिपति तावन्तोऽश्ववारा द्विचत्वारिंशदुपकरणसहिता निःसृत्य परबलं विजित्यादृश्यीभवन्ति । हेमविद्या तु येन तेनापि धातुना चूर्णयोगादक्लेशेन जात्यहाटककोटीर्निष्पादयति, इदं विद्याद्वयं सम्यग् गृहीत्वा यावदग्रे वाचयति तावत्पत्रं पुस्तकं च शासनदेवताऽपजह्रे, पुस्तकगर्भः स्तम्भोऽपि कपाटसम्पुटवन्मिलितः, व्योम्नि च वागुत्पन्ना-अयोग्योऽसीदृशानां पूर्वगतरहस्यानां, मा चापलं कृथाः, मा वृथा जीवितसंशयं धृथाः, ततः स भीतः स्थितः ।

अथापूर्वंपूर्वदेशावनीनूपुरं कर्मारपुरं स विजहार, तत्र देवपालं नाम भूपालं सरससुधादेश्यदेशनाभिराक्षिप्तं परमार्हतं चकार, अन्येद्युः सीमालभूपालैः सम्भूय तद्राज्यजिघृक्षयाऽभ्यागतैर्विद्रुतचेताः स क्षितिनेता गुरोस्तत्स्वरूपं प्ररूपयाञ्चकार, अभिनवधर्मणोऽस्य स्वल्पकोशसैन्यस्य प्राप्तदैन्यस्य धर्मस्थैर्यार्थं साम्निध्यं कृतं विलोक्यते एवेति विचार्य कार्यविदाचार्यैः स्वर्णसिद्धियोगेनागण्यं हिरण्यं विधाय सर्षपविद्यया च वैरिवित्रासमपि सूत्रयामास, ततः सोऽतिमुदितः क्ष्मादयितस्तेषां सर्वस्वमादाय विजयढक्कां वादयामास । अहह महत्सन्निधेर्निस्तुल्यं फलं, ततः स सूरिष्वेकान्तभक्तस्तांस्तत्रैव बहुसमयं स्थापयामास, ते च प्रत्यहं नृपाग्रहादिना सुखासनासीना नानाबिरुदवादिभिर्वन्दिभिः स्तूयमाना राजकुले व्रजन्ति, एवं शनैः शनैः तेषां सपरिकराणां राजसत्काराहङ्कारादिना क्रियाशैथिल्यमजायत, यतः-" ताम्बूलं१ देहसत्कारः२, स्त्रीकथे३न्द्रियपोषणम्४ । नृपसेवा५ दिवा निद्रा६, यतीनां पतनानि षट् ॥ १ ॥ सुयइ गुरू निच्चिंतो सीसावि सुयंति तस्स अणुकमसो । ओसाइज्जइ

मुक्को हुहुहुं सुअंतेहिं ॥ २ ॥ " तत्पश्चादपदं वृद्धवादी निशम्य भृशं खेदमेदस्वी गच्छं गीतार्थेभ्यो भळापयित्वा तत्प्रतिबोधार्थं गुप्तवृत्त्या वेषं परावर्त्य तत्र प्राप्तः, पर्यङ्किकारूढं श्रीसिद्धसेनं राजमान्यत्वेन नानाकलावद्भिः स्वस्वभक्तिप्रकटनार्थं नदुत्पाटनाय दीयमानस्कन्धं दृष्ट्वा स्वस्कन्धं ददे, तदा मदाध्मातमानसः सिद्धसेनः श्लोकद्विपदीं न्यगादीत्—' भूरिभारभराक्रान्तः, स्कन्धोऽयं तव बाधति ? ।' वृद्धश्चाह—' न तथा बाधते स्कन्धो, बाधतिर्बाधते यथा ॥ १ ॥ ' ततः शङ्कितेन तेनाचिन्ति—मद्गुरुं विना मदुक्ते को नामावद्यं वदितेति पर्यङ्किकात उत्तीर्य सम्यगुपलक्ष्य प्राग्जनीतापत्रपातः स्वगुरोः पदोः पपात, गुरुणाऽपि प्रतिबोधायाभिदधे-वत्स ! व्याख्याहि गाथामिमाम्-' अणुहुल्लिअफुल्ल म तोडहु मनआरामा मोडहु । मणकुसुमेहिं अच्चि निरंजणु, हिंडह काइं वणेण वणु॥ १ ॥ ' गुर्वज्ञाविधाविंगतया मतिमौढ्यात् सम्यगजानता भगवन्त एव व्याख्यान्त्विति तेनोक्ते वृद्धवादीव व्याचक्र यथा—अणुः—अल्पमायूरूपं पुष्पं यस्याः साऽणुपुष्पिका-मानुषतनुस्तस्याः पुष्पाणि-आयुःखण्डानि मा त्रोटयत-राजपूजागर्वाच्च भ्रुकुटीभिः, (मन) आरामान्—आत्मसत्कान् यमनियमादीन् सन्तापापहारकान् मा मोटयत-भञ्जयत, मनःकुसुमैः—क्षमामार्दवार्जवसन्तोषादिभिरर्चय 'निरञ्जनं' अञ्जनानि—अहङ्कारस्थानानि जातिलाभादीनि निर्गतानि यस्य स निरञ्जनः—सिद्धिपदप्राप्तस्तं ध्यायत, ' हिण्डह ' भ्रमत कथं वनेन वनं—मोहादितरुगहनेनारण्यं संसाररूपमित्येकोऽर्थः १ ॥ यद्वा अणुर्नामाल्पं धान्यं तस्य पुष्पाण्यल्पविषयत्वान्मानुषतनुः साऽणुपुष्पी तस्याः पुष्पाणि—महाव्रतानि शीलाङ्गानि च तानि मा त्रोटयत–मा विनाशयत, मनआरामं मोटयत—चित्तविकल्पजालं संहरत, तथा निरञ्जनं—वीतरागं देवं मुक्तिपदप्राप्तं मन इत्यनेन द्वौ निषेधौ मा च न च, मा कुसुमैरर्चय निरञ्जनं—गार्हस्थ्योचितदेवपूजादौ षड्जीवनिकायविराधके मा उद्यमं कुरु, सावद्यत्वात्, वनेन—शब्देन कीर्त्या हेतुभूतया वनं—चेतनाशून्यत्वादरण्यमिव भ्रमहेतुतया मिथ्यात्वशास्त्रजातं कथं भ्रमः

सि ?–अवगाहसे, तस्मान्मिथ्यावादं परिहृत्य सत्ये तीर्थकृदादिष्टे आदरं विधेहीति द्वितीयोऽर्थः २ ॥ अथवा 'अग रणे'ति धातोरणुः–शब्दः स एव पुष्पमभिगम्यत्वाद्यस्याः साऽणुपुष्पा–कीर्त्तिस्तस्याः पुष्पाणि–सद्घोषवचांसि मा त्रोटयत–मा संहरत, तथा मनस आरा–वेधकरूपत्वादध्यात्मोपदेशाः तान् मा मोटयत–कुव्याख्याभिर्मा विनाशयत, मनो निरञ्जनं-रागादिलेपरहितं कुसुमैरिव कुसुमैः–सुरभिशीतलैः सद्गुरूपदेशैः 'अर्चय' पूजितं–श्लाघ्यं कुरु, तथा वनस्योपचारात्संसारस्येनः–स्वामी परमसुखित्वात्तीर्थकृत् तस्य शब्दः–सिद्धान्तस्तत्र कथं हिण्डत ?, मा भ्रान्तिं धत्त, यतस्तदेव सत्यं तत्रैव भवता रतिः कार्येति तृतीयोऽर्थः ३॥ यदिवा प्राकृतस्य बहुप्रकारत्वादप्राप्तफलानि पुष्पाणि मा त्रोटयत, को भावः ?–योगकल्पद्रुमस्य मूलं यमनियमाः प्रकाण्डप्रायं ध्यानं स्कन्धः समता कवित्ववक्तृत्वयशःप्रतापमारणस्तम्भनोच्चाटनवशीकरणादिसामर्थ्यानि पुष्पाणि केवलज्ञानं फलम्, अद्यापि योगकल्पद्रुमस्य पुष्पाणि उद्गतानि सन्ति, तानि केवलज्ञानफलेन पुरः फलिष्यन्ति, तान्यप्राप्तफलान्येव मा त्रोटयत, आरामाः–पञ्च महाव्रतानि, मा रोवा मोडह इति पाठे रोपाः–पञ्च महाव्रतानि तानि मा मोटयत, मनःकुसुमैर्निरञ्जनं–जिनं पूजयत, वनाद्वनं किं हिण्डध्वं–राजसेवादीनि कृच्छ्राणि विरसफलानि कथं करोषीति ? चतुर्थोऽर्थः ४ ॥ एवं गुरुभिर्व्याख्याते जातात्यन्तानुशयस्संविग्नाशयः सिद्धसेनः स्वप्रमादमालोच्य राजानमापृच्छ्य तैः सह विजह्रे ।

वृद्धवादिनि स्वर्ग्गं गतेऽन्यदा प्राकृतपाठे लोकोपहासलज्जितो जातिमत्तयाऽऽबाल्यात्संस्कृताभ्यासात्कर्म्मदोषाच्च गर्वितः सन् सिद्धसेनः सङ्घं प्रत्याह—यदि सङ्घानुमतिः स्यात्तदा सर्वं सिद्धान्तं संस्कृतं कुर्वे यथा लोकोपहासादि न स्यात्, सङ्घोऽप्यनयोक्त्या जगौ–आः किमिदमनीदृक्षमाचचक्षध्वे ?, किं जिनवरा गणधरादयश्च संस्कृतसिद्धान्तविधाने न शक्ताः ?, किन्तु बालाद्यनुग्रहार्थमर्धमागधीरूपप्राकृतभाषया सिद्धान्तं निबबन्धुः, अभ्यधुश्च—" बालस्त्रीमन्दमूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् ।

अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः कृतः ॥१॥" यज्ञावन्मुनीन्द्रयोग्यानि चतुर्दशापि पूर्वाणि संस्कृतान्येव श्रूयन्ते, तदेव- मुक्तिमात्रादपि मात्रातिगजिनेन्द्राद्याशातनाकरणात् यद् प्रायश्चित्तं स्यात्तद्विमृश्य सद्यः प्रपद्यध्वं, तन्निशम्य सम्यक् सञ्जाता- त्यन्तिकपश्चात्तापभूरयः सूरयः प्राहुः-धिग्मामविमृश्यभाषिणं जिनाद्याशातनाकारिणं पाराञ्चिकप्रायश्चित्तमापन्नं, यद्यप्यदः प्रायश्चित्तं सम्प्रति तादृक्संहननादिबलाभावाद् व्युच्छिन्नं तथापि यथाशक्ति द्वादशवार्षिकं पाराञ्चिकं नाम प्रायश्चित्तं गुप्ती- कृतरजोहरणमुखपोतिकादिजैनलिङ्गः स्फटीकृतावधूतरूपः कृतमौनः सुदुस्तपतपस्तपनोद्युक्तः सम्यक् संयमयोगोपयुक्तः प्रच्छन्नवृत्त्या पाण्डुपुत्रवद् द्वादशवर्षीं विहरंश्चरिष्यामि, एवमुक्त्वा सङ्घानुज्ञया गच्छवासं मुक्त्वा जनाज्ञात एव विधिवद्ग्रामन- गरादिषु विहरन् सप्तवर्ष्यन्ते उज्जयन्यां महाकालप्रासादे समागत्य स्थितो, लोकैः पृष्टोऽपि यदा न किञ्चिदाचष्टे तदा तः राज्ञो विज्ञप्तं-देव! देवसद्मे महादेवचैत्ये कोऽपि वैदेशिकस्तिष्ठति,शब्दितोऽपि न वदति, परमेश्वरं च न प्रणमति, ततः कुतूहलाक्रान्तः क्ष्माकान्तः श्रीविक्रमादित्यस्तत्रागत्य तं प्रोचे-कस्त्वं?, धार्मिकोऽस्मीति तेनोक्ते नृपः प्राह-तर्हि कथमर्थतो नामतोऽपि महा- देवं न वन्दसे?, सोऽपि जिनमतोन्नत्यर्थमत्यर्थमुत्सुकः किञ्चिद्विचिन्त्योचिवान्-देवायं देवोऽस्मद्वन्दनस्तवनादिकं ज्वरार्दितो मोदकास्वादमिव सर्वथा न सहते, राज्ञोक्तम्-भोः! किमिदमसम्बद्धं भाषसे?, तेनोक्तम्-जातु प्रतिमोपद्रवे मा भवतामप्रीति- स्फीतिर्भूदिति शङ्कमानोऽस्मि, नृपः प्राह-मा शङ्किष्ठाः, कुरुष्व नमस्कारं स्तुतिसारं, ततः तेन 'स्वयम्भुवं भूतसहस्रनेत्रमनेक- मेकाक्षरभावलिङ्गम्। अव्यक्तमव्याहतविश्वलोकमनादिमध्यान्तमपुण्यपापम् ॥१॥ इत्यादिकाः द्वात्रिंशद्द्वात्रिंशिकाः श्रीवर्द्धमान- जिनेन्द्रगर्भाः सुसंदर्भा महार्थाः प्रथयामासिरे,तथाप्यधिष्ठायकसान्निध्याभवनेन दुष्पमासमयेऽप्यप्रतिममहिमश्रीपार्श्वजिनेश्वरस्तुतिं कल्याणमन्दिरेत्यादिकां चतुश्चत्वारिंशद्वृत्तमयीं विदधे, तस्याश्चैकादशवृत्तविधानावसरे ग्रन्थान्तरे तु प्रथमद्वात्रिंशिकाप्रथमकाव्यो-

चारावसरे एवावहितीभूतश्रीधरणेन्द्रसान्निध्येन पूर्वं शिवलिङ्गाद्धूमस्ततो धूमध्वजज्वाला प्रोच्चैः प्रादुर्बभूव, ततो लोकैः सहस्तताल सकोलाहलमनल्पं जजल्पे—नूनमनूनकोपकालानलरुद्रो रुद्रो निजतृतीयनेत्रानलेन ध्रुवमेनं भस्मसात्करिष्यसि, ततस्त्वटिति प्रस्फुटितात्तल्लिङ्गात्तडिज्झात्कार इव पूर्वं ज्योतिर्निर्गतं, ततोऽप्रतिमा श्रीपार्श्वनाथप्रतिमा प्रकटीबभूव, विस्मितो विक्रमार्कः पृच्छति स्म—महानुभाग! किमिदं अदृष्टपूर्वं ?, कोऽयमपूर्वो देवः प्रादुरास?, गुरुर्जगौ—जगत्त्रयीकृतसेवः स एष देवाधिदेवः श्रीधरणेन्द्रकृताद्भुतस्फटाडम्बरः श्रीपार्श्वजिनेश्वरस्त्रयोविंशस्तीर्थङ्करः, एष एव देवः स्तुत्यादि मदीयं सहते, एतत्सम्बन्धमवधारयतु धराधिपतिः—

पूर्वमस्यामेवावन्त्यां श्रेष्ठिनीभद्रापुत्रो द्वात्रिंशत्पत्नीयौवनपरिमलसर्वस्वास्वादलालसाप्रसलतुलामालम्बमानो अवन्तीसुकुमाल इति ख्यातः श्रेष्ठ्यासीत्, स शालीभद्र इवासमुद्रभोगरससमुद्रनिलीनो न चकार गृहव्यापारमल्पमपि, किन्तु मातैव सर्वां गृहचिन्तां चक्रे, अन्यदा मौर्यवंशधुर्यः श्रीआर्यसुहस्त्याचार्यः सम्प्रतिनृपतिप्रतिबोधविधाता गच्छयुतो विहरंस्तत्रागत्य भद्रानुमत्या तदावासासन्नवाहनकुट्यां तस्थिवान्, अन्येद्युः प्रदोषसमये सूरिभिः परावर्त्यमानं नलिनीगुल्माभिधानमध्ययनं कर्णरसायनं समाकर्णयन् सकर्णः सप्तभौमसौधादुत्तीर्य वसतिद्वारमागतः, सञ्जातजातिस्मृतिर्गुरुपार्श्वे गत्वा नत्वा चोवाच—भगवन्! भद्रातनयोऽहं नलिनीगुल्मविमाननिस्समानर्द्धिमनुभूतपूर्वीपूर्वभवो जातिस्मृत्या स्मृततत्सुखः संसारगराङ्मुखस्तत्रैव गन्तुमत्युत्सुकोऽस्मि, भदन्त! भवन्तस्तत्रभवन्तः किन्तु नलिनीगुल्मविमानादाजग्मिवांसः ?, कथमन्यथा जानीथ सम्यग् तत्स्वरूपं, तैरूचे—सर्वज्ञप्रणीतसिद्धान्तवचनाज्जानीमः, तेनोक्तं—तर्हि केनोपायेन सपदि तत्प्राप्यते ?, आचार्यैः गोचिरे चारित्रेण, परं सुकुमारोऽसि, दुश्चरं च चारित्रं, यतः—“सुखादा लोहचणकाः, सुस्पर्शा वह्नयोऽपि हि। दुष्करं तु जिनोक्तं, तपोऽती-

चारित्रवर्जितम् ॥ १ ॥ " तत्र स्वजनानुमत्यैव दीयते, ततः स पूर्वदृष्टनलिनीगुल्मविमानगमनार्थमत्यर्थमुत्कण्ठुलः संयमप्रतिपत्तये महर्धुलः पञ्चमौष्टिकं लोचं कृत्वा स्वयं स्वीकृतवेषः सूरिभिर्दीक्षितः चिरं चारित्रतपःकष्टं सोढुमक्षमः सूरीनापृच्छ्य वपुर्वेदनामगणयंस्तीक्ष्णदर्भाग्रविध्यदंह्रिद्वयगलद्रक्तधारामसृणपङ्किलपथः कन्थेरिकाकुडङ्गाभिधानं श्मशानं गत्वा पादपोपगमानशनेन तस्थौ, तद्रुधिरगन्धाकृष्टा दुष्टा नवप्रसूता शिशुयुता शृगाली ज्वालीव विकरालीकृतास्या राक्षसीव बुभुक्षिता तं भक्षयितुमारेभे, तया तडिम्भैश्च प्रथमे यामिन्या यामे तस्य चरणौ द्वितीये तस्य सक्थिनी तृतीये तस्योदरं च निःशेषितं, तथापि स मनसाऽपि लेशतोऽपि न चकम्पे, तादृक्सौकुमार्ययोगेऽप्यहो दुःसहमहाव्यथासहनं, अहो महासाहसिकशौरेयत्वं, एवं तुर्ये यामे महासत्त्वो विपद्य नलिनीगुल्मविमाने महर्द्धिस्त्रिदशोऽजनि, तत्साहसतुष्टैस्त्रिदशैस्तत्कालं तद्देहस्य महिमा निरमायि, प्रातस्तज्जायाः श्रुतोपयोगज्ञाततद्वृत्तान्तगुरुगिरा तत्स्वरूपं ज्ञात्वा भद्रया सह तस्मिन् श्मशाने गत्वा बहुतरं विलप्य विलप्य सिप्रानद्यां तस्यौर्ध्वदेहिकं चक्रुः, तद्वैराग्यरससान्द्रा भद्रा एकां गुर्विणीं वधूं सौधे मुक्त्वैकत्रिंशद्वधूपरिवृता प्रव्रज्यामुपाददे, गृहे स्थितया गुर्व्या जातेन सुतेनावन्तिसुकुमालमृत्युस्थानेऽयं प्रासादः कार्यते स्म, मम पितुर्महाकालोऽत्राभूदिति प्रासादस्य महाकाल नाम दत्तं, तन्मध्ये श्रीपार्श्वप्रतिमा निष्पतिमा अमात्रमहैः स्थापयामासे, कियन्तं समयं सा तत्र पूजयामासे, क्रमान्माहेश्वरैर्द्विजैस्तादृगवसरं प्राप्य तां पृथ्व्यन्तर्गुप्तीकृत्याकृत्यकृत्यपरैरत्र माहेश्वरं लिङ्गं स्थापयामासे, सम्प्रति मत्कृतस्तुत्यग्रहिलीभूताधिष्ठायकसान्निध्यबलेन शिवलिङ्गं विभेद्य श्रीपार्श्वप्रतिमा प्रादुर्बभूव, सत्यासत्ययोरन्तरं निरूपयतु भूपतिः । इमां सम्यगुक्तिं निशम्य विक्रमार्कः शुभोदर्कदर्शनः सञ्जातश्रीजिनमतनिस्समानबहुमानः श्रीपार्श्वजिनेश्वराय पूजार्थं ग्रामशतान्यदत्त प्रीतचित्तः, अश्लाघ्यत चैवम् बुधैः-को नाम त्वत्समानो महर्षिः ?, यतः—अहयो बहवः सन्ति, भेकभक्षणदक्षिणाः। एकः स एव शेषः स्याद्धरित्रीधरण-

क्षमः ॥ १ ॥ रवेरेवोदयः श्लाघ्यः, कोऽन्येषामुदये ग्रहः ? । न तमांसि न तेजांसि, यस्मिन्नभ्युदिते सति ॥ २ ॥ अहा ! नि-स्तुला ते कवित्वकला, यतः–' पदं सपदि कस्य न स्फुरति शर्करापाकिमं, रसाल ! रससे किमु भणितिवैभवं कस्य न ? । तवैतदुभयं किमप्यमृतनिर्झरोद्गारिमैस्तरङ्गयति यो रसैः स पुनरेक एव क्वचित् ॥ १ ॥ न नाम्नामावृत्त्या परिचयवशाच्छन्दसि न वा, न शब्दव्युत्पत्त्या निभृतमुपदेशान्न च गुरोः । अपि त्वेताः स्वैरं जगति सुकवीनां मधुमुचो, विपच्यन्ते वाचः सुकृतपरि-णामेन महता ॥ २ ॥ इति स्तुत्वा स सम्राट् निजधाम जगाम, अनया जिनशासनप्रभावनया विस्मितप्रमुदितेन सङ्घेन पारा-ञ्चिकप्रायश्चित्तशेषां पञ्चवर्षीं प्रसादपदे मुक्त्वा प्रौढप्रवेशोत्सवेन गच्छमध्ये सूरीन्द्रः स्थापयाञ्चक्रे, ततः सूरिवरः स्वविहारेण धरित्रीपवित्रीकरणप्रवणः क्रमान्मालवेष्वोङ्कारनामकं नगरमलञ्चकार, अन्येद्युर्विज्ञपयाञ्चकार तत्रत्यसङ्घस्तं यथा–भगवन्नस्यैव नगरस्यासन्नो ग्राम आसीत्, तत्र सुन्दरो नाम राजपुत्रो ग्रामणीः, तस्य द्वे पत्न्यौ एका प्रथमा पुत्रीं प्रासूत भृशमखिद्यत च, तदैव तत्सपत्न्यप्यासन्नप्रसवा वर्त्तते, मा स्मेयं पुत्रं प्रसूय भर्त्तुः सविशेषं वल्लभाऽभूदिति स्त्रीत्वोचिततया तुच्छतया दुश्चरितया तया बहुद्रव्योपचयैका सूतिका प्रोच्यत- यदैषा मे सपत्नी प्रसवकाले त्वामाहूवयति तदा त्वया परस्थानात्प्रथमसङ्गृहीतं मृतं किञ्चि-दपत्यं तत्र सञ्चार्य, तज्जातकं चेत्पुत्रो भवति तदा स्वयं गृहीत्वा ग्रामाद्दूरे व्युत्स्रष्टव्यमिति प्रपञ्चं सा प्रपञ्चयांचक्रुषी, विधिवशात्तथैव जातं, तयापि तथैव कृतं, धिग् लोभविजृम्भितं जन्तोः, स जातमात्रः पुत्रस्तया ग्रामाद्दूरे क्षिप्तोऽपि पुण्याधिक-त्वेन तत्कुलदेवतया धेनुरूपया दुग्धं दत्त्वा पाल्यमानोऽष्टवर्षदेशीयः सञ्जातोऽत्रैवासन्नशिवभवनाधिकारिणा भरटकेन दृष्टः, प्रतिबोध्य स्वां दीक्षां ग्राहितः । अन्यदा कन्यकुब्जदेशाधिपतिर्जात्यन्धः क्षितिपतिः श्रीपतिरिव नानादेशान् साधयंस्तत्पुर-प्रत्यासन्ने स्थाने आवासितः, तदा रात्रौ लघुभरटकस्य शिवेनैवं स्वप्नमादिष्टं–यत्त्वया कन्यकुब्जेशाय शेषा शेषा देया, तयाऽसौ

सज्जाक्षो भावी, तद्भावयं लघुवृद्धद्रवे समाख्याय तदाज्ञया शेषामादाय स्कन्धावारमध्यमेत्य राजामात्यान् प्रत्याह-भो! भो! स्वनाथमस्मत्सम्मुखमानयध्वं यथा सहस्रकरकरविकस्वरसहस्रपत्रतुलितनेत्रपत्रं कुर्महे, ततोऽमात्यप्रेरितः क्ष्मादयितस्तत्रागतस्तदपिप्रदत्तां शेषां सबहुमानमादायाक्ष्णोर्निवेश्य सज्जाक्षः सञ्जज्ञे, ततस्तुष्टचित्तः क्ष्मावित्तः शासने ग्रामशतानि व्यतरद्, अत्रैव चैमम् तुङ्गं गिरिशप्रासादमचीकरच्च, स भरटकर्पिरस्मिन् प्रासादे तिष्ठन्नृपादिमान्यतया जैनप्रासादं कारयितु न दत्ते, मिथ्यादृशो हि बलिनः, तस्मात्तथा कथञ्चिद्यत्यतां यथतस्मादतिशायि प्रोत्तुङ्गं चङ्गं जनचत्यमत्र निष्पद्यते, भगवतामेवात्रार्थे सामर्थ्यमिति श्राद्धविज्ञप्तिं श्रुत्वा यतीश्वरोऽवन्तीमागत्य नव्यनिर्मिताद्भुतचतुःश्लोकी पत्रहस्तो विक्रमादित्यनरेन्द्रसौधसिंहद्वारमेत्य द्वास्थेनोपनृपं श्लोकमेकमचीकथद्, यथा-दिदृक्षुर्भिक्षुरायातस्तिष्ठति द्वारि वारितः। हस्तन्यस्तचतुःश्लोक, उतागच्छतु गच्छतु ?॥१॥ तं श्लोकं श्रुत्वा विस्मितेन विक्रमादित्येन प्रतिश्लोकः कथयाञ्चक्रे, यथा-दीयतां दश लक्षाणि, शासनानि चतुर्दश। हस्तन्यस्तचतुःश्लोक, उतागच्छतु गच्छतु ॥ १ ॥ कवीन्द्रस्तं श्लोकं श्रुत्वा द्वास्थद्वारेणेदं राज्ञे व्यजिज्ञपद्-देव! दर्शनमेव भिक्षुराकाङ्क्षति न त्वर्थं, ततः स राज्ञा स्वसमीपमाहूतःउपलक्षितः सिंहासनादुत्थाय सबहुमानतः साग्रहं सिंहासने निवेश्य सभक्ति सम्भाषितश्च-भगवन्! किमिति चिराद्दृश्यध्वे ?, तैरूचे-भो भूसौधर्म! सधर्मकार्यैकाग्र्यव्यग्रत्वेन चिरादायासिष्म, शृणु श्लोकचतुष्कमिदम्-अपूर्वेयं धनुर्विद्या, भवता शिक्षिता कुतः ?। मार्गणौघः समभ्येति, गुणो याति दिगन्तरम् ॥ १ ॥ सरस्वती स्थिता वक्त्रे, लक्ष्मीः करसरोरुहे। कीर्त्तिः किं कुपिता ? राजन्!, येन देशान्तरं गता॥२॥ कीर्त्तिस्ते जातजाड्येव, चतुरम्बुधिमज्जनात्। आतपाय धरानाथ!, गता मार्त्तण्डमण्डलम्॥ ३ ॥ सर्वदा सर्वदोऽसीति, मिथ्या संस्तूयसे बुधैः। नारयो लेभिरे पृष्ठं, न वक्षः परयोषितः॥४॥ इत्यद्भुतकविताकर्णनप्रीणितात्मा विक्रमादित्यश्चतुरः करीन्द्रान् प्रवरचीवरैः सुरभिवस्तुस्तोमैः

२सौवर्णनाणकैः ३हाराद्धंहाराद्याभरणैश्च ४पूर्णानानाय्य गुरून् जगौ-गृह्णीतैतान्, गुरुराह-नैतदर्थ्यहं, पुनर्नृपः मोचे-मन्महीवर्त्तिनो महासन्निवेशांश्चतुरो देशान् स्वैरयादत्स्व, तेनोक्तम्-इदमपि नेच्छामि, तर्हि किमिच्छसीति नृपपृष्टः सूरिराचष्ट-राजन्! ॐकारपुरे रुद्रप्रासादादुच्चतरं चतुर्द्वारं जैनप्रासादं कारय, स्वयं च सपरिच्छदस्तत्र गत्वा प्रतिमास्थापनां प्रकृष्टप्रतिष्ठामहोत्सवं च निर्मापय, राज्ञापि पुण्यार्थिना तत्तथैव चक्रे, जिनमतमहोन्नत्याऽत्यन्तं सङ्घस्तुतोष, क्रमात् सूरीन्द्रो दक्षिणस्यां प्रतिष्ठानपुरे प्राप्तः, स्वायुरन्तं ज्ञात्वाऽनशनादिविधिना स्वर्लोकमलञ्चक्रे। सङ्घेन तद्गच्छस्य तं वृत्तान्तं ज्ञापयितुं वाग्मी भट्टश्चित्रकूटे प्रस्थापितः, तद्गच्छस्य पुरः पुनः पुनः श्लोकपूर्वार्द्धं पठति स्म, यथा-'इदानीं वादिखद्योता, द्योतन्ते दक्षिणापथे'। तदा सिद्धसारस्वतया सिद्धश्रीनाम्न्या सिद्धसेनभगिन्या भणितम्-"नूनमस्तं गतो वादी, सिद्धसेनदिवाकरः ॥ १ ॥" पश्चाद्भट्टेन सम्यगुक्तम् इति व्यञ्जनानामन्यथाकरणे श्रीसिद्धसेनप्रबन्धः ॥

व्यञ्जनानां न्यूनत्वे ज्ञातं, यथा-राजगृहे नगरे समवसृतस्य भगवतः श्रीवीरस्य वन्दनार्थं विबुधविद्याधरनरनिवहः श्रेणिकनृपश्च सपुत्रः समाययौ, ततो भगवदन्तिके धर्मं श्रुत्वा प्रतिनिवृत्तायां पर्षदि कस्यचिद्विद्याधरस्य गगनगामिन्या विद्यायाः सम्बन्ध्येकमक्षरं विस्मरति स्म, विस्मृते च तस्मिन्नसौ नभसि मुहुर्मुहुः किञ्चिदुत्पत्योत्पत्य निपतति, एवं च कुर्वन्तममुं विलोक्य श्रेणिकेन भगवान् पृष्टः-किमित्ययं खचरो विधुरितपक्षः पक्षीव नभसि किञ्चिदुत्पत्योत्पत्य पुनः पुनर्निपततीति ?, भगवता च विद्याऽक्षरविस्मरणव्यतिकरस्तस्मै निवेदितः, त च निवेद्यमानं श्रुत्वाऽभयकुमारः खेचरमुपसृत्यैवमवादीत्-भोः खेचर! यदि मां समानविद्यासिद्धिकं करोषि तदा त्वद्विद्याक्षरमुपलभ्य कथयामि, प्रतिपन्नं च तथा तेन, अभयस्य चैकस्मादपि पदादनेकपदाभ्यूहनशक्तिरस्ति, पदानुसारिप्रज्ञत्वादिति, शेषाक्षरानुसारेण तदक्षरमुपलभ्य खेचरस्य निवेदितं, सोऽपि सञ्जातसम्पूर्ण-

विद्यो हृष्टोऽभयकुमाराय विद्यासाधनोपायमुक्त्वा स्वस्थानं प्राप।

अथ व्यञ्जनाधिक्ये कथानिका, यथा–पाटलीपुत्रपत्तने नवमं नन्दं नृपं प्रतिज्ञापूर्वं समुत्थाप्य चाणक्येन मयूरपोषकग्राममहत्तरदौहित्रश्चन्द्रगुप्तो राज्ये न्यवेशि। तस्याङ्गभूर्बिन्दुसारभूपस्तत्सूनुः पुनरशोकश्रीनृपस्तेन स्वतनयाय कुणालाह्वयाय बाल्येऽप्यतुल्यप्रणयात्कुमारभुक्त्यर्थमुज्जयनी ददे, ततोऽत्र स्थितस्यास्य मा विमातृभ्यः पराभवो भूदिति नृपादेशात् स तत्र तिष्ठन् सचिवादिभिः पुष्पवत् पाल्यमानो यावदष्टवार्षिकोऽजनिष्ट तावत्पुत्रः पाठ्योग्य इति विमृश्याधीयतां नः कुमार इति लेखं लिखित्वा यावद्राजा किञ्चित्कार्यव्यग्रोऽजनि तावद्विमात्रा तत्रागत्य तल्लेखं वाचयित्वा कुणालकुमारेऽन्धे सति तस्यैव राजा राज्यं दास्यति न तु मत्पुत्रस्येति विचिन्त्याकारस्य सहसा शिरसि बिन्दुं ददौ, ततोऽधीयतां नः कुमार इति जातम्, अहो! बिन्दुमात्राधिक्येऽप्येकान्तहितस्याप्यर्थस्यैकान्ताहितत्वम्, क्षणान्तरे नरेश्वरस्तं लेखमवाचयित्वैव मुद्रयित्वोज्जयन्यां प्रेषयामास, तं च सचिवो वाचयंस्तथा दृष्ट्वा खेदाद्भृशं विषादमाससाद, लेखार्थं वक्तुमक्षमः सानुद्वग्यावज्जते तावत्कुमारः स्वयं लेखमवाचयत्, तत्र चान्धीयतां नः कुमार इति दृष्ट्वा जातात्यन्तोद्वेगावेगाद्ध्यातवान्–नूनं मया क्वापि पितुराज्ञाभङ्गो विदधे, नो चेत्पिता ममैकान्तहिताकाङ्क्षी कथमेवं आज्ञापयति ?, ततः स किंसुतो यः पितुराज्ञामुल्लङ्घयतीति विमृश्य मन्त्र्यादिभिर्नृपादेशनिर्णयपरिज्ञानार्थं किञ्चित्कालविलम्बाय बहूक्तोऽपि सहसैव दुर्दैववशतस्तप्तायःशलाकया स्वनयने स्वयमञ्जयामास। अहह महतामपि महानर्थमूलं सहसाकारित्वं, तदाह–"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव संपदः ॥१॥ ईदृग्दुर्विपाककार्ये हि गुर्वाज्ञाराधकस्यापि 'अशुभस्य कालहरण' मित्युक्तेर्विलम्बकरणमादेशत्रपापेक्षणं च पुंसां श्रेयस्करणं, यतः–' क्षणेन लभ्यते यामो, यामेन लभ्यते दिनम्। दिनेन लभ्यते कालः, कालात्कालो भविष्यति ॥ १ ॥' अत एव

म्लेच्छराज्ये सम्प्रत्यपि सर्वकार्येषु फुरमाणत्र्यापेक्षादिव्यवस्था, तथा सति सुविमृश्यकारितादिगुणयोगात्, यद्वा तस्य श्रीराम-स्येवैकान्तजनकवचनाराधनैकनिष्ठस्य विनीतविनयमष्ठस्य महासाहसनिधेः किं नामेदमपवदनीयं ? किन्तु निरसमविस्मयसमुच्छ्वसत्सर्वाङ्गीणरोमोद्गमनिमित्ततया महीयसामपि प्रशंसनीयं, परं पितुरेवायं प्रमादः साक्षाद्विपादः यदमात्रप्रसादपात्रेऽपि सम्यगनवलोक्य लेखप्रेषणं, को वा नृदेवस्य नवनवानेककार्यव्यग्रस्यैष दोषः ? किन्तु तस्या विमातुरेव दुर्मतेः पुरुषरत्नविनाशयित्र्यास्तादृक्कूटप्रपञ्चरचयित्र्याः, अथवा स्त्रीजातेः प्रकृतितुच्छतया रभसकारितया पापपरतया विमातुश्च नित्यं प्रद्विष्टतया हृदयदुष्टतया निजतनुजसाम्राज्यमहालोभाब्धेर्दुर्निरोधतया च किं नामैतद्दूष्यं ?, तर्हि कस्येदं दास्यते दूषणम् ?, उच्यते, प्राकृतदुष्कृतदुर्विलसितस्यैव, यत्पित्रा प्राणेभ्योऽपि प्रियतमस्य पुत्रस्य वैदग्ध्यार्थमुपक्रान्तं परिणतं तु पुनराजन्मावधि दृग्द्वयस्याप्यान्ध्यार्थम्, अवादि च–" धारिज्जइ इंतो जलनिहीवि कल्लोलभिण्णकुलसेलो । न हु अन्नजम्मनिम्मिअ, सुहासुहो दिव्वपरिणामो ॥ १ ॥ जं जेण कयं कम्मं पुव्वभवे इहभवे व संतेण । तं तेण वेइअव्वं निमित्तमित्तो परो होइ ॥ २ ॥ " नृपतिस्तद्व्यतिकरमवबुध्य धिग्मया कूटलेखकेनाकारस्य विन्दुप्रदानप्रमादेन मुधा कियाननर्थस्तीव्रवह्निरिव वर्द्धयामाहे, यद्वा प्रमाद उन्माद इव जीवस्य कं कं नानर्थं पुष्णाति ?, कं कं वा मनोरथं न मुष्णाति ?, तद्वादि–" प्रमादः परमद्वेषी, प्रमादः परमं विषम् । प्रमादो मुक्तिपूर्दस्युः, प्रमादो नरकायनम् ॥ १ ॥ " धिग्मां मूढं राज्यार्हपुत्रस्यैवं विनाशहेतुं साक्षादपत्येषु धूमकेतुं, अतः परं तु व्यङ्गत्वेन प्राणप्रियोऽपि पुत्रः कथंकारं समग्रसमृद्धिसारं राज्यं यौवराज्यं वाऽर्हति ? इति सखेदं हृदन्तः पुनः पुनरनुतप्य कुणालकुमाराय समृद्धं ग्रामं ददे, तद्वैमात्रेयाय पुनरुज्जयनीं, क्रमात्कुणालस्य तं ग्रामं भुञ्जानस्य पत्नी शरच्छ्रीनाम्नी परेद्यवि पुत्ररत्नं सुलक्षणं विदूरभूरिव वैडूर्यरत्नं प्रासूत, ततो विमातुर्मनोरथं व्यर्थयामि स्वमातुश्च समर्थयामीति विमृश्य राज्यलिप्सया पाट-

लिपुत्रे गत्वा गान्धर्व्या कलया निरतुलया पौरान् रञ्जयामास, तत्कलां श्रुत्वा नृपतिरशोकश्रीर्जवनिकान्तरे तं निवेश्य गातुमादिदेश, सोऽपि हृद्यस्वरबन्धेन गायन् ' चंदगुत्तपपुत्तो उ, विंदुसाररस नत्तुओ। असोगसिरिणो पुत्तो, अंधो जायइ कागणिं ॥ १ ॥ इति जगौ, ततः सगौरवं जगदे जगतीजानिना–कोऽसि त्वं ?, तेनोक्तम्–कुणालनामा तव सूनुस्त्वदाराधनैकाग्रचित्तः प्राणेभ्योऽपि प्रणयपात्रे स्वनेत्रे अपि यो निर्गमितवान्, ततः सस्नेहं रोमाञ्चकञ्चुकितदेहं तं परिष्वज्य तुष्टोऽस्मीति हृष्टः सन्नाचष्ट पार्थिवविशिष्टः, स ऊचे–काकणीं याचे न त्वन्यत्, राजा जगाद–वत्स ! स्वच्छमते किमतितुच्छतममियद्याचितम् ?, तदानीं सचिवा अवोचन्–राजन् ! राजपुत्राणां काकणीशब्देन राज्यमुच्यते, ततः क्ष्मापतिस्तं प्रति जल्पति स्म–हे तात ! धीधाम किं नाम तव राजलक्ष्म्या ? कथं वा दृग्विधुरत्वेन विविधव्यापारप्राज्यं राज्यं निर्वाहयिता ? कथं वा तमर्हसि ?, कुमारोऽपि कथयति स्म–हे तातपादास्तातपादानां प्रसादतस्तातपादानां पौत्रः पवित्रलक्षणपात्रं जातोऽस्ति तदर्थं राज्यं याचे नतु मदर्थं, ततः प्रोच्चैः प्रमुदितः क्षितिदयितः स्वतनयं सप्रणयं प्रोचे–कदा मुदास्पदं विशदात्मा त्वात्मभूरभूत् ?, कुमारः प्रोवाच–सम्प्रत्येव, ततः परमप्रीतिस्फीतिविवश उर्वीशः सम्प्रति पुत्रो जात इति मुहुर्मुहुराजुघोष, दशाहादनु तं महत्तममहैरानाय्य प्राज्यप्रमोदाक्रान्तः क्ष्माकान्तः सम्प्रतीत्येव नामस्थापनां विधाय राज्ये निवेशयामास, स सम्प्रतिनृपतिस्त्रिखण्डभोक्ता परमार्हतः श्रीसुहस्तिसूरिनिर्देशेन श्रीजिनमतसाम्राज्यं सर्वप्रकारैरेकच्छत्रीचक्रे। इति व्यञ्जनाधिक्ये आख्यानकम् ॥

अर्थस्यान्यथाकरणादौ विशेषतः पूर्वोदिता दोषाः, अत्र दृष्टान्तोऽयम्, शुक्तिमतीपुर्यां श्रीमुनिसुव्रतस्वामिवंशेऽभिचन्द्रनरेन्द्रसुतं सत्यवादित्वेन विश्रुतं वसुं पर्वतकाख्यं स्वपुत्रं नारदं च क्षीरकदम्बकोपाध्यायः परमार्हतः पाठयति, अन्यदा पाठश्रान्तेषु तेषु निशि सौधोपरि सुप्तेषु चारणश्रमणौ व्योम्नि व्रजन्तावन्योऽन्यमित्यूचतुः–एषामेकः स्वर्गगामी अपरौ तु नरकगामिनौ,

तच्छ्रुत्वोपाध्यायः खेदाद् दध्यौ–धिग्मय्यप्यध्यापके शिष्यौ नरकं यास्यतः, तदेषां मध्ये कः स्वर्गं कौ च नरकं यास्यतीति तन्निर्णयाय परीक्षायै त्रयाणामेकैकं पिष्टकुर्कुटमर्पयित्वा तत्रामी वध्या यत्र कोऽपि न पश्यतीत्यादिदेश, ततो वसुपर्वतौ शून्यप्रदेशे गत्वा तं जघ्नतुः, नारदस्तु दूरदूरं शून्यस्थाने गतोऽपि सुधीत्वेन दध्यौ–अत्राप्यहं सुराः सिद्धा ज्ञानिनश्च पश्यामः, तत्स्थानं तु विश्वेऽपि नास्ति यत्र कोऽपि न पश्यति, तद् ध्रुवमवध्योऽयमित्येव गुरुगिरां तात्पर्यं, प्रकृतिकृपालुभिस्तैर्वधादेशप्रदानं त्वस्मत्परीक्षार्थमेव, ततस्त्रयोऽपि पश्चादागत्य स्वं स्वं स्वरूपं व्यजिज्ञपत्, उपाध्यायेन नूनं नारदः स्वर्गगामीति निश्चित्य सगौरवमालिलिङ्गे, इतरौ तु तर्जितौ, तद्वैराग्यादेवोपाध्यायः प्रवव्राज, तत्पदं पर्वतकोऽध्यास्त, क्रमादभिचन्द्रनरेन्द्रे प्रव्रजिते वसुर्वसुमतीविभुर्बभूव, स च सत्यवादित्वप्रसिद्धिस्थैर्याय सत्यमेव वदति, अन्यदा मृगयार्थं गतेन मृगयुणा विन्ध्याचले आकाशस्फटिकशिलासङ्क्रान्तं मृगं प्रति निक्षिप्तबाणस्खलनात्पाणिस्पर्शेन सा ज्ञाता, तां च राज्ञे विज्ञप्तवान्, राजाऽपि तस्मै पारितोषिकं दत्त्वा तया स्वासनवेदिकां प्रच्छन्नं घटयित्वा शिल्पिनश्च हत्वा तां निजसिंहासनादधोऽतिष्ठिपत्, सत्यवादित्वेन खे सिंहासनं तिष्ठतीति स्वख्यातिमुदघोषयच्च, तत्प्रसिद्ध्याऽस्य सुराः सान्निध्यं कुर्वन्तीति भिया भूपाः सर्वे वशीबभूवुः । अन्यदा पर्वतकम् 'अजैर्यष्टव्य' मिति ऋग्वेदपदे अजः–मेषैरिति व्याख्यातं श्रुत्वा नारदोऽवादीत्-मैवं वादीः, यतो न जायन्त इत्यजाः-त्रिवार्षिकं धान्यमित्येवं गुरुणा व्याख्यातं, मा धर्मोपदेष्टारं गुरुं धर्मात्मिकां च श्रुतिमन्यथा कार्षीरित्यादि बहूक्त्याऽप्यभिमानान्न स व्यरंसीत्, ततस्ताभ्यां जिह्वाच्छेदः पणीचक्रे, वसुश्च साक्षीचक्रे, तच्छ्रुत्वा पर्वतजननी रहस्तमाह–मयाऽपि त्वत्पिता त्रिवार्षिकधान्यान्येव व्याकुर्वन् श्रुत इति किं मिथ्यैव महानर्थकरणं पणं करोषि ?, तेनोक्तं–यत्कृतं तत्कृतमेवेति यथाहंमुपायं चिन्तय, साऽपि पुत्रमोहमोहिता पुत्रहितार्थं तथा वसुनृपाय प्रोक्तवती यथा गुरुपत्नीदाक्षिण्याद्यथोक्तं तेन मेने, प्रातः पर्षद-

न्तस्तयोर्विवादे प्रकृष्टपातकमप्याहत्य वसुः कूटसाक्ष्यं यावद्ब्रवीत् तावद्देवतया चपेटयाऽऽहत्य पातितो मृतो नरकं ययौ, एवं तत्पदे निवेशितास्तत्सुता अपि क्रमादष्टौ देवतया निहताः, दुस्सहो हि दैवतः कोपः, द्वौ तु पुत्रौ नष्टौ, ततः पर्वतकः पौरैर्धिक्कृत्य निर्वासितो महाकालासुरेण सङ्गृहीतः, तत्सम्बन्धस्त्वयम्—

अयोधननृपेण स्वपुत्र्याः स्वयंवरे प्रारब्धे जनन्या कन्यायाः प्रच्छन्नं प्रोक्तं–मद्भ्रातृव्यो मधुपिङ्ग एव त्वया वरणीयः, तच्च सर्वं नृपमुख्यः सगरो रहःस्थितस्वदूतीमुखात् ज्ञात्वा स्वपुरोहितं कन्यावरणोपायं पप्रच्छ, सोऽपि सद्यःकविः कपटपटुर्नव्यां राजलक्षणसंहितां कृत्वा सभाऽन्तस्तया व्याचख्यौ यथा लक्षणैः सगरः प्रकृष्टः स्यात् मधुपिङ्गस्त्वपकृष्टः, ततः स सर्वैर्नृपादिभिर्हस्यमानो ह्रिया निर्गतः, सगरस्तु कन्यया वृतः, ततो मधुपिङ्गः क्रुधा तपः कृत्वा महाकालोऽसुरोऽजनि । तयोश्च तृतीयः पिप्पलादोऽपि मिलितः, तद्वृत्तान्तस्त्वेवम्—

सुलसासुभद्राख्ये परिव्राजिके द्वे जनविख्याते अभूतां, तयोश्च सुलसा विशिष्यतमा विदुषी, यो मां वादे जयति तस्याहं शिष्य इति पटहोद्घोषिणं याज्ञवल्क्यं परिव्राजकं वादे जित्वा स्वशिष्यीचक्रे, क्रमात्तस्यातिपरिचयेऽकार्यप्रवृत्त्या सुलसाया गर्भे जाते ज्ञाते च सुभद्रया निष्ठुरमुपालब्धा प्रच्छन्नं च धृता, पुत्रप्रसवे सुभद्राया अज्ञातमेव पिप्पलस्याधः पुत्रं त्यक्त्वा तौ निर्गतौ, मातः पदानुसारेणान्वेषयन्त्या सुभद्रया डिम्भो दृष्टः, स च क्षुधितः स्वयं पिप्पलफलं मुखे पतितमास्वादितवानिति पिप्पलाद इति कृतनामा सुभद्रया वर्द्धितः, पाठितश्चातिवाग्मी जातः, स्वजन्मसम्बन्धे श्रुते पित्रोः प्रद्वेषं वहन् यथार्थमनार्योऽनार्यवेदांश्चकार, तेषु चेदं प्ररूपयाञ्चकार, यदुत–राजभिरश्वादिशान्तिनिमित्तं स्वर्गावाप्तये च पशुतुरगगजमनुष्यादिभिर्यागः कार्य इति, महाकालेन चाचिन्ति–यद्येनयोक्त्या राजादयो यागे हिंसां कुर्वन्ति तदा मृत्वा नरकं यान्तीति सगरादिनृपाणां

मम वैरनिर्यातना भवतीति तयोरुक्तम्-युवां यज्ञे हिंसां प्रवर्त्तयतमहं सर्वत्र सान्निध्यं करिष्यामि, ततो महाकालेन पुरग्रामादौ रोगा विकुर्विताः, यत्र यत्र च पर्वतकपिप्पलादौ हिंसात्मकं यागं कारयतस्तत्र तत्र सः असुरो रोगानुपशमयति, यज्ञहतांश्च पश्वादीन् विमानस्थानमरीभूतान् साक्षाद्दर्शयति, ततः सर्वेऽपि भृशं सादराः सगरनृपादयस्तथा चक्रुः, एवं मनुष्यहिंसाऽपि तैर्निःशूकैः शनैः शनैः प्रवर्त्तिता, ततो मायया मोहयित्वा महाकालेन सभार्यः सगरोऽध्वरं जुहुवे, पिप्पलादेन च स्वपितृमातृमेधश्चक्रे, तदर्थत्वात्तयोरुपक्रमस्य, एवं महानर्थहेतवोऽनार्या वेदाः प्रवृत्ताः। आर्यास्तु वेदान् माणवकनिधेरुध्धृत्य प्रतिदिनभोज्यमानश्राद्धपठननिमित्तं श्रीतीर्थंकरस्तुतिरूपान् श्राद्धधर्मप्रतिपादकांश्च भरतश्चक्री चक्रे॥ इत्यमर्थान्यथाकरणे पर्वतज्ञातम् । व्यञ्जनार्थोभययोरन्यथाकरणेऽनन्तरकथामध्योक्तोऽनार्यवेदकारी तद्व्याख्याता च पिप्पलादो यद्वा श्रीगुप्ताचार्यशिष्यनोजीवस्थापकत्रैराशिकरोहगुप्तादयो दृष्टान्ताः । एवं व्याख्याताः षष्ठसप्तमाष्टमा व्यञ्जनार्थतदुभयाचाराः ॥ ८ ॥ एवमष्टविधो ज्ञानाचारः सम्यगाराधनीयः ॥ इति श्रीतपागच्छश्रीसोमसुन्दरसूरिशिष्यश्रीरत्नशेखरसूरिविरचिते श्रीआचारप्रदीपे ज्ञानाचारप्रकाशकः प्रथमः प्रकाशः (ग्रन्थाग्रं १२१२ अ. १७)

अथ दर्शनाचारो व्याख्यायते-तत्र दर्शनं-सम्यक्त्वं, तत्स्वरूपं सप्रपञ्चमस्मदुपज्ञश्राद्धप्रतिक्रमणसूत्रवृत्तेर्ज्ञेयं, दर्शनाचाराराधनं च नव्यप्रासादप्रतिमानिर्मापणजीर्णोद्धारादिनाऽर्हद्भक्तिपोषणतः साधुवरिवस्यासञ्जातजिनमतनैपुणतश्च स्यात् । तत्रार्हद्भक्तिपोषः कोकाशकाकजङ्घनृपाभ्यां प्राग्भवे यथा कृतस्तथा कार्यः, जिनमतनैपुणं च कोकाशवत्, दर्शनशुद्धौ च स्वीकृतश्राद्धधर्मनियमेषु प्राणान्तेऽपि दार्ढ्यमेव स्यात्, नतु शैथिल्यं, यथा स्वीकृतदिग्व्रते काकजङ्घनरेन्द्रस्य, तयोः सम्बन्धश्चायम्— अर्थान्यथात्वे वसुद० ॥३०॥

भरतभूमिभामिनीभूषणमाणिक्यकङ्कणायमानश्रीमत्कुङ्कणाभिधानदेशशृङ्गारकं सोपारकं नाम पुरं 'जीवत्स्वामिश्रीयुगा-

दीशभूर्त्तः,कर्तुं सेवां किन्तु यत्रावतीर्णा। जातिर्वानस्पत्यशेषा विशेषात्, को वा तादृक्तीर्थमुच्चैः श्रयेन्न ?॥१॥ तत्र सर्वत्र विख्यात-महाविक्रमधनो विक्रमधनो नाम नरेन्द्रः, बलिधाम्नि सुधाधाम्नि च नाब्धौ च सुधा हि यदसिधारायाम्। यामास्वाद्य संपदप्यरयः श्रियमामरीमभजन्॥ १॥ तत्र च नगरे नरेश्वरस्य परमप्रसादपात्रं त्रिजगदद्वितीयकलाकलापकुशलः परिवसतिस्म रथकाराग्रणीः सोमिलः, तस्य प्रशस्यगुणनैर्मल्यनिर्जितसोमा सोमानाम भार्या, तयोस्तनुजन्मा देविलनामा, तस्यैव रथकारस्य दास्याः पुत्रो द्विजाज्जातः कोकाशनामा, स च रथकारः स्वतनूरुहं प्रत्यहंमहाक्षेपेण स्वकलाग्रहणं कारयति, यतः—“ पितृभिस्ताडितः पुत्रः, शिष्यश्च गुरुशिक्षितः। घनाहतं सुवर्णं च, जायते जनमण्डनम्॥ १॥” परं तत्पुत्रस्य न तादृशी बुद्धिर्नापि तादृशी हृदयशुद्धिःन च तादृशोऽपि विद्याग्रहणविषयोद्योगः नापि तादृग् भाग्ययोगः, तेन तत्पित्रा बह्वाक्षेपकरणेऽपि न तस्मिन्किंश्चित्कलाकौशलमुन्मीलति, वैकटिकेन बहुयत्नविधानेऽप्यन्धोपल इव निर्मलता, उक्तं च—“ नानुद्योगवता न च प्रवसता मानं न चोत्कर्षता, नालस्योपहतेन नान्यमनसा नाचार्यविद्वेषिणा। न भ्रूभङ्गविलासविस्मितमुखीं सीमन्तिनीं ध्यायता, लोके ख्यातिकरः सतां बहुमतो विद्यागुणः प्राप्यते॥ १॥” मतिस्पर्धितिबृहस्पतिसङ्काशः कोकाशस्तु दासत्वेन रथकारतनूरुहस्य पार्श्वे तूष्णीकतयैव तिष्ठन्नपि हेलयैव सकलाः कलाः प्राग्लिखितपठिता इव कलयामास, धारयामास च सोमिलादपि क्रमेणाधिकतरं रथकारकलाकौशलं ‘ स्थाने बीजं शुक्तौ स्वातिजलं सति च सत्कृतिः पात्रे। दानं मतिमति विद्या वक्तरि वाच्यं च वृद्धये स्यात्॥ १॥’’ रथकृत्तनूजस्तु शून्यहृदयः कलाशून्यतया कलादवन्निष्फलतामेवाचकलत्। कालक्रमेण च सोमिलरथकारे कृतस्वर्लोकावतारे पुत्रस्य कलाविकलतया कोकाश एव नृदेवशासनात्तत्पदमलञ्चक्रे; विद्या हि कामदुघेव पुंसः किं नाम कामितममितमपि न दत्ते ?, उक्तं च—विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं, विद्या भोगकरी यशःसुखकारी विद्या गु-

रूणां गुरुः । विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं, विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥ १ ॥ हर्तुर्याति न गोचरं किमपि शं पुष्णाति सर्वात्मनाऽप्यर्थिभ्यः प्रतिपाद्यमानमनिशं वृद्धिं परां गच्छति । कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं, येषां तान् प्रति मानमुज्झत जनाः कस्तैः सह स्पर्द्धते ? ॥ २ ॥ यद्वा—" दासेरोऽपि गृहस्वाम्यमुच्चैः काम्यमवाप्तवान् । गृहस्वाम्यपि दासेरत्यहो प्राच्यशुभाशुभे ॥ १ ॥ " स च कोकाशोऽन्यदा—तं रूवं जत्थ गुणा त मित्तं जं निरंतरं वसणे । सो अत्थो जो हत्थे तं विन्नाणं जहिं धम्मो ॥ १ ॥ श्रीधर्मो दययैकधा द्विविधको ज्ञानक्रियाभ्यां त्रिधा, ज्ञानाद्यैश्च चतुर्विधो वितरणाद्यैः पञ्चधा तु व्रतैः।षड्सप्ताष्टविधश्च भूजलमुखत्राणान्नयैर्मातृभिः, तत्त्वैः स्यान्नवधा तथा दशविधः क्षान्त्यादिकैः सद्गुणैः ॥ २ ॥ सम्यक् सम्यक्त्वमूलस्य, दार्ढ्य एव भवेत्पुनः । निःसीमशर्मफलदः, श्रीमद्धर्म्मसुरद्रुमः ॥ ३ ॥ सम्यक्त्वं चात्र देवादितत्त्वश्रद्धानलक्षणम् । प्रपञ्चयन्ति चतुराः, सप्तषष्टिगुणात्मकम् ॥ ४ ॥ यदार्षम्—' चउसद्दहण १ तिलिंग२ दसविणय३ तिसुद्धि४ पंचगयदोसं५ । अट्ठाभावणद दूसण७ लक्खण८ पंचविहसंजुत्तं ॥ ५ ॥ छव्विहजयणागारं९ छब्भावणभाविअं च१० छट्ठाणं११ । इय सत्तसट्ठिलक्खणभेयविसुद्धं च सम्मत्तं ॥ ६ ॥ " अनयोर्व्याख्या दर्शनसप्ततिकाप्रकरणादवसेया । इत्यादिसाधूक्तसूक्तमयदेशनाप्रतिबुद्धमनाः प्रतिपन्नदृढसम्यक्त्वादिश्राद्धगुणः सद्गुरुवरिवस्यासञ्जातजिनमतनैपुणः सुखेन समयं गमयामास क्ष्मावासवमहाप्रसादपात्रतया ।

इतश्च—पुरुषार्थत्रयीत्रिवेणीसङ्गमपवित्रं पाटलिपुत्रं नाम नगरं ' लक्ष्मीवतां दुर्दमदुर्मदाग्निना, त्रिविक्तता शैत्यमिव प्रणश्यति । सत्योक्तिरेषाऽपि मृषा त्रिनिर्ममे, यस्मिन्जनैर्लक्ष्मिविवेकशालिभिः ॥ १ ॥ तत्र च चित्रकृन्निजप्रचण्डप्रतापमात्रवित्रासिताशेषशत्रुर्जितशत्रुर्नाम नृपः ' यस्य दिग्विजयिनः पृतनान्तः, सर्वतः प्रसृतवन्ति रजांसि । लेभिरे मलिनतां त्वरिवक्त्रास्तद्गु-

धूजनदृशो गलिताश्च ॥ १ ॥ तस्य च सौभाग्यातिशयादिगुणैः साक्षाद् देवीव यशोदेवी नाम पट्टदेवी प्रथमा प्रथमाननिःसमान-
रूपमाना, द्वितीया निधिरिव राज्ञोऽभ्युदयहेतुरप्रतिरूपरूपादिभिः मातङ्गेशविजया विजया नाम, तस्मिन् समये च द्वितीय इव
स्वर्गसन्निवेशे मालवदेशे निजनिस्समसमृद्ध्या धनदपुरीमपि परिभवन्त्यां श्रीमदवन्त्यां नाम नगर्यां परमार्हतत्वेन सम्यक्तत्त्व-
विचारधवलो विचारधवलो नाम नराधिपः, तस्य च त्रिजगच्चेतश्चमत्कारकारीणि चत्वारि पुरुषरत्नान्यभूवन्–सूपकारः शय्या-
पालकोऽङ्गमर्दको भाण्डागारिकश्चेति, तत्र सूपकारो यथाभिलषितं तां कांचिद्रसवतीं विधत्ते यया भुक्तया तस्मिन्नेव क्षणे
क्षणान्तरे प्रहरे द्वित्रिचतुःप्रहर्यां यावद्द्वित्रिचतुरादिदिनेषु पक्षमासादिषु वा यथाभीप्सितमेव क्षुत्प्रादुर्भवति न त्वारतः परतो
वा १, शय्यापालकश्च तादृक्किञ्चित् तल्पं कल्पयति यस्मिन् सुप्तः पुमान् परमसुखमनुभवन् यथाभिलषिते नियत एव काले घटि-
कायामनिशादिवसादिरूपे प्रबुध्यते २, अङ्गमर्दकश्चैकद्वित्रिचतुष्पञ्चषट्सप्तसेरादिप्रमाणं बहुतरमपि तैलं शरीरान्तरावर्त्तयति
सर्वमपि च पश्चादाकर्षति, न च स्वल्पमपि दुःखमुत्पादयति, किन्तु भृशं सुखमेव, भाण्डागारिकः पुनर्भाण्डागारं तथा किञ्चि-
द्विरचयति यथा तस्य द्वारं तं विना नान्यः कश्चित्कथञ्चिदपि लभते, न च तत्र खात्रादि दातुं कोऽपि शक्नोति, तदन्तःप्रवि-
ष्टोऽपि तद्दर्शितं विना धनकनकादि न कश्चित्सूक्ष्मेक्षिकयापि प्रेक्षते, एवं भाण्डागारं सुरक्षितं करोति४, यथास्वामिसमीहमहर्निशं
कृतयत्नै रत्नैश्चतुर्दिक्प्रसृतैश्चिन्तारत्नैरिव पूर्यमाणचिन्तितार्थचक्रः स क्ष्माशक्रः सुखेन महीयांसमनेहसमतिवाहयामास सोल्ला-
सधीर्धर्मविधौ, परं तस्य किञ्चित्प्राक्तनदुर्दैवात् पुत्रो नाजायतैकस्या अपि राज्या यथार्हबहूपायकरणेऽपि "मात्सर्यादिव दैवं
प्रायःसर्वस्य किञ्चिदूनत्वमाकुरुतेकुनाऽन्यथाऽब्धिः क्षारश्चन्द्रः कलङ्की च ॥ १ ॥" ततो विरक्तचित्तः स क्ष्मावित्तः प्रव्रज्यां प्रतिपि-
त्सुर्यावत्कस्यचिद्गोत्रिणो राज्यं दित्सते तावत्पाटलिपुत्रपुराधिपेन जितशत्रुक्षितिपेन पूर्वव्यावर्णितरत्नचतुष्टयाद्यपूर्वसमृद्धिलुब्धेन

[०] प्र०
र्शनाचार.
॥ ३२ ॥

‘वीरभोज्या वसुन्धरे’ति वितर्कधारिणा गङ्गापूरवत्परितः प्रसारिणा सैन्येन सह सहसैव समेष्ट्यते स्मोज्जयनी नगरी, यावच्च मध्यस्थसुभटैः सन्नह्य युध्यते तावद्दैववशादुत्पद्यते स्म विचारधवलनृपतेरनर्थमूलं जठरमहाशूलं, तेन च दग्धोपर्यसाध्यस्फोटकप्रायेणातितरां पीड्यते स्म नृपः, अहह महतामप्यनिर्वाच्या कापि दुरवस्था, यद्वा हतकस्य दैवस्य स्वभाव एवायं, यतः—‘वैदेहीदयितेऽपि दुष्टहृदयः पार्थेऽप्यनर्थप्रदो, जीमूतेऽपि यथोचितव्यवहृतिः कर्णेऽपि कर्णेजपः। भीमो भीमसुतापतावपि हरिश्चन्द्रेऽपि रौद्राशयः, शक्रेऽपि श्रितवक्रिमा हतविधिर्यस्तस्य केऽन्ये पुनः ? ॥ १ ॥ तदवसरे नरेश्वरः सम्यग् धर्मतत्त्वविचारचतुरः ‘धर्मपराणां पुंसां जीवितमरणे सदैव कल्याणे। इह जीवतां विवेकः सद्गतिगमनं मृतानां च ॥ १ ॥ धीरेणवि मरिअव्वं कायरएणवि अवस्स मरिअव्वं। दुण्हंपि हु मरिअव्वे वरं खु धीरत्तणे मरिउं ॥ २ ॥ इत्यादिसूक्तार्थानुस्मृतेर्धीरमना आराधनाऽनशनादिविधिना स्वःसुखास्वादमाससाद, महाशूलाद्युत्पत्तिर्हि प्रायो मृत्युनाटकस्य नान्दी, उक्तं हि—“ सूलविसअहिविसूइअपाणिअसत्थग्गिसंभमेहिं च। देहंतरसंकमणं करेइ जीवो मुहुत्तेणं॥ १ ॥” ततोऽमात्यादिकः ‘हतं सैन्यमनायक’मिति कदर्थनभयाद्गोपुरमुद्घाट्य पौरैःसह पुरस्सरीभूय भूयस्तरादरेणैव प्राभृतमिव जितशत्रुनृपाय पुरीं समर्पयामास, प्रमुदितेन तेनापि स्वयं तद्राज्यमधिष्ठाय मन्त्र्यादयः सर्वेऽपि सन्मानदानपूर्वं यथास्वस्वव्यापारं विन्ययोज्यन्त। तानि च चत्वार्यपि पुरुषरत्नानि क्ष्मापः परीक्षाञ्चक्रे परीक्षायां च क्रियमाणायामङ्गमर्दनेन राज्ञोऽङ्गमपद्यत बहुतरेण तैलेन तावद्यावदेकस्यामेव जङ्घायां पञ्चकर्षी तैलमावर्त्तयाञ्चक्रे स्वहस्तादिकलया, ततः पुनः समग्रादपि शरीरादुद्वर्त्तनिकादिप्रयोगेण तत्तैलं निःशेषमप्याचकर्ष, परं राज्ञोऽनुज्ञयैकस्या जङ्घायास्तैलं नाकर्षि, अन्योऽपि यः कश्चित्कलावन्मानी मानी भवति सोऽस्या जङ्घायाः स्नेहमाकर्षयत्विति नृपपर्षत्समक्षमुच्चैराचख्ये च, तद्वचनाकर्णनकर्णमोडपीडिताः संवाहककलापण्डिता अभिमानधनास्तदभ्यञ्जनाकर्षणायानेकेऽप्यनेकप्रका-

निःशंकि०
कोकाशच०
॥ ३२ ॥

रैरुदयंसिषुः परमेकेनापि तत्तलं तज्जङ्घाया असाध्यव्याधिरिव वपुषो नाकृष्यत, अङ्गमर्दकरत्नेनापि च तद्दिन एव क्रष्टुं शक्यते न तु दिनान्तरेऽपीति तत्त्रैव कूपे कूपच्छायेव तिष्ठति स्म, तद्विकाराच्च राज्ञो जङ्घा किञ्चित्स्थूला प्रकर्षेण कृष्णा चाजनिष्ट, ततःप्रभृति तस्य नृपतेः काकजङ्घेत्याख्या जनैर्यथार्थं प्रथयामाहे, को हि नाम महानपि जनोक्ति जलधिवेलामिव स्खलयितुमलंभूष्णुः ?, न हि लोकचोकमुखबन्धो भवतीति सर्वविदितमेव, 'न तथा सुनाम लोके यथाऽपनाम प्रसिद्धिमायाति। मापतुपकूरगडुकसावद्याचार्यरावणादिकवत् ॥ १ ॥" तदेवं स काकजङ्घो राजा परीक्षाकपपट्टनिर्व्यूढान् कलावत्पौढांश्चतुरोऽपि सन्मानदानचतुरो भृशं सन्मानयामास, ते तु स्वस्वामितत्तादृशवैशसदर्शनान्निर्वेदमासेदिवांसः, यतः—'किं राज्येन धनेन धान्यनिचयैर्देहस्य सद्रूपणैः, पाण्डित्येनभुजाबलेन महता वाचां पटुत्वेन चाजात्याऽप्युत्तमया कुलेन शुचिना शुभ्रैर्गुणानां गणरात्मा चेन्न विमोचितोऽतिगहनात् संसारकारागृहात्॥ १॥ वरमेका कला रम्या, यथाऽधः क्रियते भवः। बह्वीभिरपि किं ताभिः, कलङ्को यासु वर्द्धते ?॥२॥ ततः अत्युच्चैः प्रतिबन्धनिर्बन्धविधायिनमपि नृपं कथमप्यनुज्ञाप्य चत्वारोऽपि प्रव्रज्य प्राज्यदुस्तपतपोभिः सिद्धिवध्वाश्लेषसुखमखण्डितमेवानुबोभवाम्बभूवुः ॥ इतश्च कुङ्कणदेशे निर्द्धनजनसंहारमहारक्षःसदृक्षं महादुर्भिक्षं बभूव, यस्मिन् धनवन्तोऽपि निर्धनायन्ते राजानोऽपि रङ्कायन्ते साहसिका अपि कातरायन्ते साधुधौरेया अपि चौरायन्ते महेच्छा अपि तुच्छायन्ते दानशौण्डा अपि मितंपचायन्ते सधर्माणोऽपि निर्धर्मायन्ते सत्कर्म्माणोऽप्यसत्कर्मायन्ते अपत्रपिष्णवोऽपि निरपत्रपायन्ते विवेकिनोऽपि निर्विवेकायन्ते सदाक्षिण्या अपि निर्दाक्षिण्यायन्ते सदया अपि निर्दयायन्ते सस्नेहा अपि निःस्नेहायन्ते सशूका अपि निःशूकायन्ते अकठोरा अपि कठोरायन्ते सुसन्तोषा अप्यसन्तोषायन्ते सुप्रतिष्ठा अपि निष्प्रतिष्ठायन्ते सद्बुद्धयोऽपि निर्बुद्धीयन्ते, किं बहुना ?, यस्मिन् बुभुक्षामहाराक्षसीपरवशीकृतचित्ताः पित्रादयोऽपि प्राणेभ्योऽप्यभीष्टस्य स्व-

पुत्रादेस्त्याज्यभृत्यादेखि विक्रयं मृतस्येव परित्यागं केचिन्निःशूकतया तन्मांसभक्षणाद्यप्यसमंजसमाचरन्ति, उक्तं च—" मानं मुञ्चति गौरवं परिहरत्यायाति दीनात्मतां लज्जामुत्सृजति श्रयत्यदयतां नीचत्वमालम्बते। भार्याबन्धुसुहृत्सुतेष्वपकृतीर्नानाविधाश्चेष्टते, किं किं यन्न करोति निन्दितमपि प्राणी क्षुधा पीडितः ? ॥ १ ॥ " यच्च सर्वेभ्योप्युपद्रवेभ्योऽतिभैरवं, ' परचक्रागमवह्न्याद्युपद्रवे किमपि तिष्ठति क्वापि। विश्वोत्पातसदृक्षं दुर्भिक्षं त्वखिलसंहारि ॥ १ ॥ ' ईदृक्षे महादुर्भिक्षे वर्त्तमाने महत्स्वकुटुम्बं निर्वाहयितुमनलंकर्मीणः कोकाशः सकलमपि कुटुम्बं सहादाय दुर्भिक्षाद्युपद्रवैरकृतप्रवेशे मालवदेशे निजसमृद्धिविशेषनिःशेषनगर्युज्जयनीमुज्जयनीं क्रमाज्जगाम, परं तत्र न कश्चित्परिचित उपलक्षितो वा यं पुरस्सरीकृत्य राज्ञो मिलति स्वकलाकौशलं च दर्शयति, न च तादृक्कलापात्रस्य दन्तीन्द्रस्येव क्षितीन्द्रमन्तरेणापरं निर्वाहपदं, यतः—" अश्वीनादौ कृत्वा भवति तुरगो यावदवधिः, पशुर्धन्यस्तावत्प्रतिवसति यो जीवति सुखम्। अमीषां निर्माणं किमपि तदभूद्दग्धकरिणां, वनं वा क्षोणीभृद्भवनमथवा येन शरणम् ॥१॥" न च तादृगवस्थं तं कलावन्तमपि क्षीणकलावन्तमिव कश्चिद् दृग्भ्यामपि साक्षेपं प्रेक्षते, दूरेऽस्तु स्थानप्रदानादिसन्मानकथापि। ततः स सर्वाध्वनीनसाधारणायां देशकुट्यां विनोदशिशोद्गिन स्म, उक्तं हि—" दौःस्थ्यं नाम पराभूतेः, स्थानमाद्यं न संशयः। राजपि गोपतेः पादान्, क्षीणः संसेवते यतः ॥ १ ॥ " ततः स प्रत्युत्पन्नमतिर्विज्ञाननैपुणमेव सर्वाभीप्सितार्थसाधनानुगुणमिति विमृश्य पराःशतान् काष्ठपारावतान् मोडनान् विनिर्माय तादृक्कीलिकादिप्रयोगेण राज्ञः कोष्ठागारेषु प्रेषयति, तेऽपि जीवन्त इव तत्क्षणात्तत्र गत्वा कणादानचञ्चुभिर्निजचञ्चुभिः शालितण्डुलैर्जठराणि कोष्ठपूरमापूर्य पश्चादागच्छन्ति, तैः कणैः सः स्वकुटुम्बं निर्वाहयति स्म, अन्यदा शालिरक्षकैः शालितस्करं सम्यग्गवेषयद्भिर्दृष्टाः काष्ठकपोताः पोता इव शालिकणैः परिपूरिताः क्ष्मापतिकोष्ठागारेभ्यः सत्वरं निस्सरन्तः, प्राग्वाश्च साश्चर्यचेतसः काष्ठकपोत-

निःशङ्कि० कोकाशच० ॥ ३३ ॥

पृष्ठानुगा एव कोकाशगृहं, प्रेक्षाञ्चक्रिरे च कोकाशं तत्कणगणग्राहिणं, ततश्च लब्धचौर इति प्रमुदितैस्तैर्बहुदिनचिन्तितमथ राज्ञो दर्शनं कलाकौशलप्रकटनेन बहुमानश्च मे भविष्यतीति सञ्जातमत्याशः कोकाशः काकजङ्घनृपसमीपं नीयते स्म, नृपप्रष्टेन पृष्टश्च स्पष्टमभाषिष्ट सम्यगेव सकलमपि शालिकणाहरणान्तं स्ववृत्तान्तं, यतः—“ सत्यं मित्रैः प्रियं स्त्रीभिरलीकमधुरं द्विषा। अनुकूलं च सत्यं च, वक्तव्यं स्वामिना सह ॥१॥ ” ततः सम्यक्स्वरूपकथनात्तत्काष्ठकपोतनिर्माणकलातिशयदर्शनाच्च तुष्टस्वान्तः क्ष्माकान्तस्तं पुनः प्रश्रयात् प्रश्नयामास—निस्तुलकलाविलास ! भोः कोकाश ! किं किं चमत्कारातिशयस्थानं विज्ञानं वेत्सीति ?, तेनापि प्रत्यूचे—देव ! देवपादप्रसादतस्तिरस्कृताखिलशिल्पिगर्वं सर्वं रथकृद्विज्ञानं वेद्मि, दर्शयामि स्वामिन् ! काचित्कीलिकाचारितं मनोहारिणं काष्ठमयं मयूरं गरुत्मन्तं कीरकलहंसादिकमन्यमपि वा तादृशं पक्षिणं यं रथवरमिवावितथं भूमाविव व्योमाङ्गणेऽपि कीलिकादिप्रयोगेण यथेप्सितं गम्यते आगम्यते च, प्रासादगृहादि वा यथाभीप्सितं सर्वमपि विश्वकर्मवत् करोमि। तद्वचनमाकर्ण्य कौतूहलनिधिः क्ष्माभिर्तृस्तं प्रति प्रोवाच वाचमेवं—एवं तर्हि भो निर्मीहि नभोमार्गगमनागमनकलाच्छेकं गरुडमेकं येन नभस्तलादपि भूमण्डलं यथाभिलषितं विलोकयामः, ततस्तेन वैज्ञानिकावतंसेन सत्वरमेव विरचयाञ्चक्रेऽर्द्धचक्रिगरुड इव विशिष्टकाष्ठमयोऽतितुलितगरुडः। तद्दर्शनमात्रेणैव क्षितिपतिः प्रोच्चैस्तुष्यति स्म, तस्मै प्रयच्छति स्म चातिविस्मयावहं बहु धनकनकरत्नादि निवासादि च, सर्वमपि यथा विलोकयमानं सबहुमानं, ततः स्वविज्ञानकलानकालार्जितसकलावासादिमलयसामग्रीको राज्ञो मान्यतमतया प्रथितनिजसिद्धिप्रकाशः कोकाशः सकुटुम्बोऽपि यथासुखं तत्र तिष्ठति स्म, अहो ! विज्ञानस्य वाञ्छितार्थसाधकत्वं, उक्तं च—“ लवणसमो नत्थि रसो विण्णाणसमो अ बंधवो नत्थि। धम्मसमो नत्थि निही कोवसमो वइरिओ नत्थि ॥१॥” अन्येद्युः कौतुकसाक्रान्तः क्ष्माकान्तस्तं चारु दारुमयं वैनतेयं सपट्टराज्ञीकः समधिरुह्य सलक्ष्मीकः साक्षाल्लक्ष्मीपति-

रिव वसुधावलयविलोकनार्थं मरुत्पथपथेन प्रतिष्ठते स्म विदितगगनगमननिबन्धनकीलिकाविन्यासेन कोकासेन साकं क्रमादनेककौतुकानि स्वचक्षुर्विषयं नयन्नानाकाननदीनगरग्रामसीमादि युगपदिवोल्लङ्घयन् लघ्वेव यावदत्तुच्छभृगुकच्छपुरोपरि धरित्रीपतिर्गच्छति स्म तावत्पृच्छति स्म सविस्मयं पट्टदेवी नृदेवम्-देव! देवपुरस्यापि प्रवरसमृद्ध्या जित्वरं किंनामेदं नगरम्? किं नाम्नी चेयं स्रोतस्विनी त्रिदशस्रोतस्विनीव निर्मलनीरपूरविभ्राजिनीति, ततः पृथ्वीपतिः तन्नामादि सम्यक्स्वरूपमजानन् यावन्न प्रतिवदति वदति स्म तावत्तन्नामादि विदितपूर्वी विज्ञानधुर्वीधुरन्धरः कोकासरथकृद्वरः-स्वामिन्। श्रीमुनिसुव्रतस्वामि विंशतितमतीर्थंकृत्पदपद्मपाविताभ्यन्तरं भृगुकच्छनामैतन्नगरं, इयं पुनः पौराणां सर्वाङ्गीणशर्मदा निर्व्रीडपरिक्रीडमानमानव्यतीतभीतसितच्छदचक्रवाकाद्यनेकरंगद्विहंगममिथुननानाविधक्रीडाकौतुकैर्नभःसंचारिणां खेचरकिन्नरादिमिथुनानामपि नर्मदा नर्मदा नाम नदी, अस्मिंश्च पुरे पुरा सुरासुरसेव्यः समुत्पन्नदिव्यकेवलः श्रीमुनिसुव्रतस्वामी दक्षिणाशामुखमण्डनात् प्रतिष्ठानपुरपत्तनादेकस्यामेव यामिन्यां षष्टियोजनीमतिक्रम्यागतो यागे जुहुषितं सर्वाङ्गसल्लक्षणभूषितं हयवरं पूर्वभवस्वमित्रं पूर्वभवकथनादिना जनितजातिस्मृतिं प्रतिबोध्य कृतसर्वसचित्तपरित्यागं स्थिरीकृतदृढधर्मानुरागं सौधर्मकल्पे कल्पेश्वरसमानर्द्धित्रिदशश्रियं प्रापयामास। तेन च सुरवरेण कृतप्रज्ञवरेण तदैव तत्र समेत्य प्रधाने स्वामिसमवसरणस्थाने नूत्नं रत्नमयं महीयस्तरं विहगवरं निर्माय तदन्तः कृतत्रिजगज्जनमनोऽभिमतपूर्त्तिर्जीवत्स्वामिश्रीमुनिसुव्रतनाथमूर्त्तिः तत्पुरस्तुङ्गतुरङ्गमरूपा प्राग्भवनिजमूर्त्तिश्च स्थापयाञ्चक्रे, तत्प्रभृत्यश्वावबोधतीर्थता तस्य प्रसिद्धिमध्यासामास, सोऽपि देव आसन्नसिद्धिकतया निर्णिक्तभक्तिभावितया निरन्तरं निर्मितश्रीमुनिसुव्रतस्वामिपदपद्मसेवः सार्वत्रिकयात्रिकलोकसकलाभिलषितपूरणेन चिरकालं तत्तीर्थं प्रभावयामास, कालान्तरे च तत्रैका वटशबलिका प्राग्भववैराविर्भूतव्यापादनेच्छ-

म्लेच्छमुक्तमार्गणेन विद्धा प्राग्भवेकृतसकृज्जिनवन्दनसाध्वीशुश्रूषारूपसुकृतवशप्रान्तसमयसाधुदत्तनमस्कारमहामन्त्रश्रद्धानेन शुभ-ध्यानेन मृत्वा सिंहलेशनरेशस्य सप्तानां पुत्राणामुपरि परमप्रेमपात्रीत्वेनोदपादि । सा च क्रमात्प्राप्तयौवना भृगुपुरागतक्षि-तिपसभप्राप्तमहेभ्यश्रुतसमयसमुच्चारितनमस्काराद्यपदश्रवणसञ्जातजातिस्मरणा पितरौ कथमप्यापृच्छय सप्तशत्या महापोतै-र्भृगुकच्छपुरमेत्य तच्चैत्योद्धारादिपुण्यमगण्यमेव निर्ममे, तदादि पुनरेतत्तीर्थं श्रीशकुनिकाविहार इति ख्यातिमायाति स्म । क्रमेण चात्रैव तीर्थे परमार्हतश्रीकुमारपालभूपालमन्त्रीश्वरोदयनतनयश्रीशत्रुञ्जयतीर्थोद्धारश्रीरैवतगिरिसुगमपद्यानिर्मापणा-द्यनेकप्रौढपुण्यप्रकटमन्त्रिमुकुटश्रीवाग्भटस्यानुजवरेणाम्बडमन्त्रिश्वरेण पितुः पुण्यनिमित्तमुद्धारः कारयिष्यते मिथ्यादृष्टिदुष्ट-देवीकृतोपद्रवविद्रावकश्रीहेमसूरिसान्निध्येन, अत्र च लौकिकान्यप्यनेकानि तीर्थानि सन्तीति कोकाशमुखाकर्णिततीर्थमहि-मानौ पट्टदेवीराजानौ कोकाशश्च तच्चैत्ये श्रीसुव्रतप्रभुं प्राणंसिषुः, ततस्त्रयोऽपि ते पुनः प्राग्वदेव वैनतेयमधिरुह्याग्रतो दक्षि-णस्यां दिशि कस्यचिन्महानगरस्योपरि यावत्प्राप्तास्तावत्तथैव पार्थिवं प्रश्नयामास पट्टराज्ञी–स्वामिन् ! किमेतन्नगरं ? केयं च कल्लोलिनीति, प्राग्वदेव भूजानौ मौनमुपेयुषि कोकास एवेत्थं कथयामास–देवेदं लौकिकोक्तिप्रसिद्धं निस्सीमकमलाविला-ससमिद्धे महाराष्ट्रनाम्नि महाराष्ट्रविभूषाकरं पुरा पद्मासननिवेशितं पद्मपुरं नाम पुरं, विजयमानश्रीचन्द्रप्रभस्वामिवचसा सौधर्मेन्द्रपार्श्वगृहीतचन्द्रप्रकान्तरत्नमयश्रीचन्द्रप्रभस्वामिप्रतिमापुरःप्रारब्धमहायागसिद्ध्या प्रीतचित्तवृत्तिना प्रजापतिनाऽत्र पुरे श्रीचन्द्रप्रभविहारः कारयांमाहे । क्रमेण चात्रैव पितृवचनाराधनार्थं वनवासिनि रामे रावणभगिनी सूर्पणखा द्वादशवर्षाविधि-वंशजालीमध्याधोमुखधूमपानकारिस्वपुत्रचन्द्रहासखड्गविद्यासिद्धिसम्भावनया प्राप्ता प्राक्प्रागतलक्ष्मणहस्तघटिततत्समयो-परिस्थितचन्द्रहासच्छिन्नवंशजालीमध्यत्रुटितस्वपुत्रमस्तकदर्शनादतिक्रुद्धाऽनुपदिकैव पृष्ठागता रामं दृष्ट्वा व्यामोहं प्रपन्ना प्रार्थ-

याश्चक्रे, रामेण निषिद्धा च लक्ष्मणमुपेता, तेनापि भ्रातृजायेति प्रतिषिद्धा क्रोधाध्मातत्वं दर्शयन्ती छिन्ननासिकी चक्रे, तदा चैतन्नासिक्यपुरं जातं, रामेण च रावणं निहत्य सीता प्रत्यानीय पश्चाद्बलमानेनात्र श्रीचन्द्रप्रभस्वामिविहारोद्धारः कारितः। क्रमाच्च पाण्डुराजपट्टराज्ञ्या कुन्त्या श्रीजिनधर्माराधनैकाग्रमहिम्ना श्रीयुधिष्ठिरे पुत्र जाते सत्येतच्चैत्यमुद्दध्रे, तदा कुन्ती-विहार इति चैतत्प्रथे, एवमत्रानेकेऽप्युद्धाराः। एषा च निःशेषाश्रितजनताकृतप्रमोदा गोदावरी नाम निम्नगा, पुनरेवमग्रतो गमने जलधौ कलधौतमयसकलपुरालोकने तथैव राज्ञः प्रश्ने राज्ञा च जोषंपोषे कोकास एवोवाच-देवेयं दिव्यऋद्धि-विलासेनालकाया अपि कृतातंका लङ्कानाम्नी नगरी गरीयस्तरकूटत्रिकूटदुर्गमहासागरपरिखादिविशेषैर्निःशेषाणामपि विद्वेषिणां पराजयकरी, अस्यां च प्रकृत्याऽप्यमन्दमदोत्कर्षेण साक्षादैरावणो रावणो नाम प्रतिवासुदेवः सिद्धविद्यासहस्रः शतसहस्रवि-द्याधरेन्द्रनरेन्द्रनिर्मितसेवःपुरा राज्यं प्रतिपालयति, तेन चातिप्रसर्पद्दर्पाध्मातेनेन्द्रार्कचन्द्रादिदेवाभिधानधारकतद्विधाधरविविध-सेवाविधिविधापनादिना पुरन्दरादप्यधिकंमन्येन त्रिजगत्यपि अप्रतिरूपभूपतीयितं। श्रूयते च तथा लोके तस्य ऋद्धिस्वरूपं, यथा-रावणेन देवेन्द्रेणापि दुर्ग्रहा नव ग्रहाः स्वखट्वापादे बद्धाः, त्रिभुवनजनस्यापि प्रदत्तात्यन्तिकातङ्ककृत्यो मृत्युरपि बद्ध्वाऽन्तः-पाताले क्षिप्तः, तस्य च वायुर्देवो गृहाङ्गणप्रमार्जकः, चत्वारोऽपि जीमूता गन्धाम्बुवर्षुकाः वनस्पतयः पुष्पप्रकरकारकाः यमः स्वमहिषेण जलवाहकः सप्तापि समुद्रा मज्जनकारकाः सप्तापि मातर आरात्रिकोत्तारिकाः विश्वकर्मा शृङ्गारकारकः शेषनागेन्द्रः छत्रधारकः गङ्गायमुने चामरहारिके षट् ऋतवः पुष्पपूरकाः सरस्वती वीणावादिनी रम्भातिलोत्तमादयो नृत्यकारिकाः तुम्बु-रुर्गायनः नारदस्तालवादकः आदित्यो रसवतीकारकः चन्द्रः प्रतिकलममृतस्रावकः मङ्गलो गहिषीदोहकः बुध आदर्शदर्शकः बृहस्प-तिर्घटीयन्त्रवादकः शुक्रो मन्त्रीश्वरः शनैश्चरः पृष्ठरक्षकः त्रयस्त्रिंशत्कोटयोऽपि देवाःसेवाकृतः अष्टाशीतिसहस्रा ऋषयः प्रपापालकाः

नारायणो दीपिकाधारी आस्थाने इन्द्रो मालकारः ब्रह्मा पुरोहितः भृङ्गिरीटिराचमनदाता जीमूतऋषिरपःस्खलेलयिता कामदेवोऽसिधेनुबन्धकः वैश्वानरश्चीवरप्रक्षालकः कार्त्तिकेयस्तलारक्षः विनायकश्चिरमेहिचारकः चामुंडा चाउरिसश्चारिका गौरी शणकर्त्तनकारिका लक्ष्मीः वस्तुरक्षाकर्त्री नारदो हेरिकः धनदो भाण्डागारिक इत्यादि । ईदृक्समृद्धिसमृद्धोऽपि परस्त्रीगृद्धिवशोत्पन्नदुर्बुद्धिः सीतापहृतिमहापातकविफलीभूतसर्वाङ्गीणबलः सम्यग्न्यायमार्गाभिरामेण रामेण लक्ष्मणमात्रसहायेन लीलयैव सकलपरिकरेण सार्कं सार्कंपं प्रहृत्य परलोकं प्राप्यते स्म इत्यादि, अस्यां च लङ्कापुरी खेचरेन्द्रकारितास्तीर्थभूताः प्रभूताः प्रदत्तभव्यजनमनःप्रसादाः श्रीजैनप्रासादाः सन्तीति, ततस्तत्रापि त्रयोऽपि देवान् ववन्दिरे । पुनश्च तथैव पुरतः प्रतस्थिरे क्रमाद्वलिरे च । एवमन्येद्युः प्रतीच्यां दिशि गरुत्मति गते तथैव च रथकारवरो व्याहरति स्म विस्मयावहं श्रवणमात्रतोऽपि सकलकल्मषापहं श्रीशत्रुञ्जयश्रीरैवतमहातीर्थमाहात्म्यप्रबन्धं, सविस्तरनिबन्धं ततस्तत्रापि तैर्देवा वावन्द्यन्ते स्म विस्मयप्रमुदितचित्तैः एवमुदीच्यां दिशि कैलाशापराभिधाननानाश्चर्यनिधानविशिष्टस्फाटिकशिलामययोजनाष्टकोच्चरूपश्रीभरतचक्रिकारितसिंहनिषद्यास्वरूपनिष्मविरूपस्वस्ववर्णप्रमाणाद्युपेतस्फुरदमलरत्नमयश्रीऋषभादिचतुर्विंशतिजिनप्रतिमासमेतसौवर्णदिव्यप्रासादभूषितोत्तुङ्गशृङ्गश्रीमदष्टापदनगेन्द्रतीर्थप्रबन्धं श्रीमदजितादितीर्थकृद्विंशतिनिर्वाणस्थानविनिर्मितदिव्यस्वरूपरत्नमयमहास्तूपसमलङ्कृतसम्मेतशैलतीर्थप्रबन्धं पुरस्ताच्च शाश्वतसिद्धायतनाद्यनेकाश्चर्याद्वैताढ्यवैताढ्यगिरीन्द्रनिरीक्षणे श्रीऋषभदेवसेवासन्तुष्टश्रीधरणेन्द्राष्टचत्वारिंशत्सहस्रविद्याप्रदानदक्षिणोत्तरश्रेणिद्वयपञ्चाशत्षष्टिमहानगरस्थापनराज्यादिनमिविनमिप्रबन्धं च सुधीः स एवाभ्यधात् । दिनान्तरे च प्राच्यां दिशि श्रीयुगादिदेवादितीर्थंकरपञ्चकजन्मादिनिस्तुल्यकल्याणकमहपात्रप्रथिमसमृद्धविश्वप्रसिद्धश्रीमदयोध्यादितीर्थकृज्जन्मादिभूमिन्यावर्णनायां तथैव तेन विधीयमानायां शान्त्यादिजिनत्रयसनत्कुमारादिचक्रिपञ्चकचरमशरीरि-

पश्चात्पाण्डवाद्यनेकोत्तमपुरुषोत्पत्तिस्थानस्य श्रीऋषभवार्षिकतपःपारणकश्रेयांसोपक्रमदानश्रीशान्तिश्रीकुन्थुश्रीअरजिननिर्वृतिव-जैकल्याणकचतुष्कभवनश्रीशान्तिकुन्थ्वरमल्लिसमवसरणविष्णुकुमारमहर्षिलक्षयोजनरूपविकुर्वणसाधुद्वेषिनमुचिशिक्षणसौधर्मेन्द्रजीवकार्त्तिकश्रेष्ठिपरिव्राजकपरिवेषणार्थराजाभियोगवैराग्योद्भवनैगमाष्टोत्तरसहस्रपरिवृततन्मुनिसुव्रतस्वामिसमीपप्रव्रजनाद्यनेकैतिह्यसहस्रनिधानस्य श्रीहस्तिनापुराभिधानस्य तीर्थप्रधानस्य व्यावर्णनाप्रस्तावे शान्तिकुन्थुश्रीअरजिनास्त्रयोऽप्यत्र चक्रवर्त्तीभूय तीर्थकृद्भूयमुपेयिवांस इति व्यतिकरश्रवणविस्मितचेता महीनेता कीदृशी सा सार्वभौमसमृद्धिरिति प्रश्नयामास कोकासं वर्द्धकिवरं, सोऽपि प्रायः सर्वाङ्गीणनैपुणः प्रत्यभाषीत्—क्षोणीन्द्रचक्रिणाकर्णय चक्रित्रऋद्धिस्वरूपं विश्वेऽप्यप्रतिरूपं,तथाहि-चक्रवर्त्तिनः षट्खण्डं भरतक्षेत्रे नव निधानानि चतुर्दश रत्नानि च । तत्र नवनिधानस्वरूपं प्रवचनसारोद्धारगाथाभिरुपदर्श्यते, ताश्चेताः—

नेसप्पे१ पंडुणए२ पिंगलए३ सव्वरयण४ महपउमे५ । काले६ महाकाले७ माणवग८ महानिही संखे९ ॥ १ ॥ नेसप्पंमि निवेसा गामागरनगरपट्टणाणं च । दोणमुहमडंवाणं खंधारगिहाणं च ॥ २ ॥ गणिअस्स य बीआणं माणुम्माणस्स जं पमाणं च । धन्नस्स य बीयाणं उप्पत्ती पंडुए भणिआ ॥ ३ ॥ सव्वा आहरणविही पुरिसाणं जा य जा य महिलाणं । आसाणं हत्थीणं पिंगलयनिहिंमि सा भणिआ ॥ ४ ॥ रयणाइं सव्वरयणंमि चउदस पवराइं चक्कवट्टीणं । उप्पज्जंती एगिंदिआइं पंचिंदिआइं च ॥ ५ ॥ चक्कासिछत्तदंडा आउहसालाइ हुंति चत्तारि । चम्ममणिकागिणिनिही सिरिगेहे चक्किणो हुंति ॥६॥ सेणावइ गाहावइ पुरोहिओ वड्ढई अ निअनयरे । थीरयणं रायकुले वेअड्ढतले अ करितुरया ॥ ७ ॥ वत्थाण उ उप्पत्ती निप्फत्ती चेव सव्वभत्तीणं । रंगाणं धाऊण य सव्वा एसा महापउमे ॥ ८ ॥ काले कालनाणं भव्वपुराणं च तिसुवि वंसेसु । सिप्पसयं कम्माणि अ तिन्नि पयाए हिअकराइं ॥ ९ ॥ लोहस्स य उप्पत्ती होइ महाकालि आगराणं च । रुप्पस्स सुवण्णस्स

य मणिमुत्तिअसिलपवालाणं ॥ १० ॥ जोहाणं उप्पत्ती आवरणाणं च पहरणाणं च । सवा वि जुद्धनीई माणवगे दंडनीई अ ॥ ११ ॥ नट्टविही नाडयविहि कवस्स चउविहस्स निष्फत्ती । संखे महानिहिंमि अ तुडिअंगाणं च सवेसिं ॥ १२ ॥ चक्कट्ठपइट्ठाणा अट्ठुस्सेहा य नव य वि क्खंभे । बारस दीहा मंजूससंठिआ जण्हवीइ मुहे ॥ १३ ॥ वेरुलिअमणिकवाडा कणगमया विविहरयणपडिपुन्ना । ससिसूरचक्कलक्खण अणुसमवयणोववत्तीआ ॥ १४ ॥ पलिओवमट्ठिईआ निहिसरिनामा य तत्थ खलु देवा । जेसिं ते आवासा अक्किज्जा आहिवचाय ॥ १५ ॥ एतासां क्रमात्किञ्चिद्व्याख्या–नैसर्पिरित्यादिषु नवसु निधिषु कल्पपुस्तकानि शाश्वतानि सन्ति, तेषु च विश्वस्थितिराख्यायते, तत्र यस्मिन्निधौ यदाख्यायते तदाह–दशकुलसाहस्रिको ग्रामः, आकरो यत्र लवणाद्युत्पद्यते, नगरं राजधानी कररहितं वा, पत्तनं–जलपथस्थलपथयोरेकतरयुक्तं, द्रोणमुखं–जलपथस्थलपथयुक्तं, मडम्बम्–अर्द्धतृतीयगव्यूतान्तर्ग्रामान्तररहितं स्कन्धावारः–कटकनिवेशः चशब्दादापणं च, ग्रामादींश्चान्यथापि केचिद्व्याकुर्वन्ति, यदुक्तम्–"ग्रामो वृत्यावृतः स्यान्नगरमुरुचतुर्गोपुरोद्भासिशोभं, खेटं नद्यद्रिवेष्ट्यं परिवृतमभितः कर्बटं पर्वतेन । ग्रामैर्युक्तं मडम्बं दलितदशशतैः पत्तनं रत्नयोनिर्द्रोणाख्यं सिन्धुवेलावलयितमथ सम्बाधनं चाद्रिशृङ्गे ॥१॥" गणितस्य–दीनारपूगफलादिलक्षणस्य गीतानां–स्वरपाटवकरणादीनां प्रबन्धानां मानं–सेतिकादि तद्विषयं यत्तदपि मानमेव, धान्यादि मेयमिति भावः, उन्मानं–तुलाकर्षादि, बीजादीनां–शाल्यादीनां देशकालौचित्येनोत्पत्तिः–निष्पत्तिः ॥३॥ चतुर्थ्यादिगाथाचतुष्कमुत्तानार्थम् ॥ ७ ॥ सर्वभक्तीनां–सर्वेषां वस्त्रादिगतानां विशेषाणां रङ्गाणां मञ्जिष्ठाकुसुम्भादीनां धातूनां–लोहादीनाम् ॥८॥ जगति त्रयो वंशास्तीर्थकरचक्रिबलवासुदेवसत्का एषु यद्भव्यं–भावि पुराणम्–अतीतं उपलक्षणत्वाद्वर्त्तमानं च, शिल्पशतं घट१लोह२चित्र३वस्त्र४नापित५शिल्पानां प्रत्येकं विंशतिभेदत्वात्, कर्माणि–कृषिवाणिज्यादीनि

जघन्यमध्यमोत्कृष्टभेदेन त्रीणि ॥ ९ ॥ शिलाः-स्फाटिकादयः ॥ १० ॥ आवरणानां-खेटकादीनां-सर्वापि युद्धनीतिः-व्यूहरचनादिलक्षणा दण्डनीतिः-सामादिश्चतुर्द्धा ॥ ११ ॥त्रुटिताङ्गानाम्-आतोद्यानाम्, एषामुत्पत्तिराख्यायते। अन्ये त्वेते पूर्वोक्ताः पदार्थाः सर्वेऽपि नवसु निधिषूत्पद्यन्ते साक्षादेवेति व्याख्यानयन्ति ॥१२॥ प्रत्येकमष्टसु चक्रेषु प्रतिष्ठानम्-अवस्थानं येषां तेऽष्टचक्रप्रतिष्ठानाः, प्राकृतत्वादष्टशब्दस्य परनिपातः, अष्टौ योजनान्युत्सेधः-उच्चत्वं येषां ते अष्टोत्सेधाः, मंजूषासंस्थान-संस्थिताः, सदैव गङ्गामुखेऽवस्थिताः, भरतविजयानन्तरं चक्रिणा सह पातालेन चक्रवर्तिपुरमनुगताः ॥ १३ ॥ वैडूर्यमणिमयानि कपाटानि येषु ते वैडूर्यमणिकपाटाः, शशिसूरचक्राकाराणि लक्षणानि-चिह्नानि येषु ते शशिसूरचक्रलक्षणाः, प्राकृतत्वाज्जसूलोपः, अनुरूपा समा-अविषमा वदनोपपत्तिः-द्वारघटना येषां तेऽनुसमवदनोपपत्तयः ॥ १४ ॥ आवासा आश्रयाः, आधिपत्याय-आधिपत्यनिमित्तमक्रेयाः, नाधिपत्यं क्रयेण लभ्यमिति भावः ॥ १५ ॥ इति नवनिधिस्वरूपम् ।

चतुर्दश रत्नानि पुनः सेनापत्यादीनि, तत्र सेनापतिर्गङ्गासिन्धुपरपारविजयसमर्थः परैरप्रतिहतशक्तिः १ ॥ गृहपतिः गृहोचितशाल्यादिसर्वधान्यानां फलानां शाकानां च तत्कालमेव कर्त्ता सकलचक्रिसैन्यस्यापि पूरयिता च प्रस्तावे २ ॥ पुरोधाः सर्वक्षुद्रोपद्रवोपशान्तिकृत् ३ ॥ गजवाजिनौ प्रकृष्टवेगपराक्रमौ ४-५ ॥ वर्द्धकिरवसरे सत्वरमेव समग्रसार्वभौम-सैन्यस्यापि यथाविलोक्यमानभवनविरचनाद्यलङ्कर्मीण उन्मग्नानिमग्नानामनिम्नगायुग्मसुगमपद्याकृच्च ६ ॥ स्त्रीरत्नं सर्वातिशायिकामसुखनिधानम् ७ ॥ चक्रं सहस्रारं व्यामप्रमाणं सर्वायुधप्रधानममोघं च ८ ॥ व्याममात्रं छत्रं प्रभुहस्तस्पर्शाद् द्वादशयोजनविस्तारं वैताढ्योत्तरभागवर्त्तिम्लेच्छानुरोधिमेघकुमारोत्सृष्टप्रकृष्टवारिधारानिवारि नवनवतिसहस्रकाञ्चनशलाका प्रथितं काञ्चनमयोद्दण्डदण्डमण्डितं वस्तिप्रदेशे पञ्जरविराजितमर्जुनाभिधानप्रधानपाण्डुरस्वर्णप्रत्यवस्तृतपृष्ठदेशं तपनातपवात-

वृष्टयादिदोषनाशकं च ९ ॥ चर्म द्विहस्तममितं वैताढ्यपर्वतोत्तरदिग्वर्तिम्लेच्छकारितातुच्छमेघवृष्टौ स्वामिकरामर्शाद् द्वादशयोजनविस्तृतं व्योम्नि स्थितमुपरि छत्ररत्नाच्छादितं सकलचक्रिसेनाजनानां वसुन्धरावदाधारभूतं प्रातरुप्तोऽपराह्णनिष्पद्यमानशाल्याद्युत्पत्तिनिमित्तं च १० ॥ मणिरत्नं चतुरङ्गुलमलम्बं द्व्यङ्गुलपृथुलं वैडूर्यमयं त्र्यस्रं षडंशं छत्रतुम्बस्थं हस्तिस्कन्धस्थं च द्वादश योजनानि प्रकाशयति क्षुद्रोपद्रवान् विद्रावयति हस्तस्थे तस्मिन्नवस्थितयौवनः स्यादवस्थितकेशनखश्च ११ ॥ काकिणीरत्नमष्टसौवर्णिकं चतुरङ्गुलं समचतुरस्रं सर्वविषापहारि तमिस्राखण्डप्रपातागुहयोर्द्वादशयोजन्यवधि तिमिरहरं, चक्रिणा रजन्यां सैन्यान्तर्न्यस्तं सूर्यवत्प्रकाशकरम्, चक्री च तमिस्रागुहायां पूर्वपश्चिमभित्त्योः प्रत्येकं योजनान्तराणि पञ्चधनुःशतायामविष्कम्भाणि योजनं यावदुद्योतकानि चक्रनेम्याकाराणि वृत्तानि गोमूत्रिकाक्रमेणैकस्यां भित्तौ पञ्चविंशतिमपरस्यां चतुर्विंशतिमेवमेकोनपञ्चाशतं मण्डलानि तेन काकिणीरत्नेन खटिकावत् सुखोल्लेखेन लिखन् व्रजति भरतापरार्द्धदिग्विजयाय, यावच्चक्री तावत्तान्यवतिष्ठन्ते, गुहापि च तावदेवोद्घाटा तिष्ठति, एवं खण्डप्रपातगुहायामपि ज्ञेयं १२ ॥ खड्गः द्वात्रिंशदङ्गुलप्रमाणः सङ्ग्रामेऽप्रतिहतशक्तिः १३ ॥ दण्डरत्नं रत्नमयं पञ्चलताकं वज्रसारं व्यामप्रमाणं शत्रुसेनावित्रासकं विषमोन्नतभूमिभागसमत्वकारकं शान्तिकरं मनोरथपूरकं सर्वत्राप्यप्रतिहतं योजनसहस्रमप्यधः प्रविशति १४ ॥ चतुर्दशापि चैतानि प्रत्येकं यक्षसहस्राधिष्ठितानि । एषु च सेनापत्यादीनि सप्त पञ्चेन्द्रियाणि चक्रादीनि च सप्तैकेन्द्रियाणि पृथ्वीपरिणामरूपाणि इति चतुर्दशरत्नस्वरूपम् ॥

चक्रिणश्च षोडशसहस्री यक्षाणां सेवाकर्त्री, तत्र चतुर्दशसु रत्नेष्वेकैकः सहस्रः एकैकश्च चक्रिणः स्कन्धयोः, द्वात्रिंशत्सहस्राश्च मुकुटबद्धराजानः सेवकाः, चतुष्षष्टिःसहस्रा अन्तःपुरपुरन्ध्यः एका लक्षाऽष्टाविंशतिः सहस्राश्च वाराङ्गनाः, द्वात्रिंशत्सहस्राणि

देशाः, द्वासप्ततिः सहस्रा महापुराणि अष्टाचत्वारिंशत्सहस्राः पत्तनानि नवनवतिसहस्रा द्रोणमुखानि षट्त्रिंशत्सहस्रा वेलाकूलानि चतुर्दश सहस्राः जलपथाः एकविंशतिः सहस्राः सन्निवेशाः, द्वात्रिंशत् सहस्रा महानगर्यः षोडश सहस्रा राजधान्यः षोडश सहस्राः खेटानि चतुर्विंशतिः सहस्रा मडंबानि तावन्त्येव कर्बटानि चतुर्दश सहस्राः संवाधनानि षोडश सहस्रा रत्नाकराः नवनवतिः सहस्राः सुवर्णाद्याकराः विंशतिः सहस्राः सामान्याकराः षोडश सहस्राणि द्वीपाः षट्पञ्चाशदन्तरद्वीपाः षण्णवतिकोट्यो ग्रामाः एकोनपञ्चाशत्सहस्राण्युद्यानानां एकोनपञ्चाशत्कुराज्यानि षोडश सहस्रा म्लेच्छराज्यानि चतुरशीतिर्लक्षा गजाश्वरथानां प्रत्येकं षण्णवतिः कोटयः पत्तयः सर्वसैन्ये त्वष्टादश कोटयोऽश्वाः मन्त्रीश्वराणां चतुर्दशसहस्री पण्डितानामशीतिसहस्री तलारक्षा सूत्रधाराश्च प्रत्येकं चतुरशीतिसहस्री नियोगिनां कोटित्रयं कौटुम्बिकानां कोटिसप्तकं त्रीणि शतानि षष्टिश्च सूपकाराश्चक्रिणो भोज्यार्थमेव, अन्यथा तु षट्त्रिंशत्कोटयः सूपकाराः, षट्त्रिंशत्कोट्यश्चाभरणधारकाः चतुःषष्टिः सहस्राः कल्याणमहाकल्याणकारकाः षट्त्रिंशत्कोट्योऽङ्गमर्दाः त्रिलक्षी शस्त्रधराः पञ्चलक्षा दीपिकाधराः तिस्रः कोट्य आतोद्यानि चतुरशीतिलक्षा निःस्वानानि दश कोट्यः पताकाः द्वात्रिंशत्सहस्रा द्वात्रिंशद्बद्धनाटकानि त्रिलक्षी भोजनस्थानकानि द्वात्रिंशत्कोट्यः कुलानि एका कोटी गोकुलानि कोटीत्रयं हलानि अष्टादश श्रेणयः प्रश्रेणयश्चाष्टादश श्रेष्ठिसार्थवाहकौटुम्बिकमहत्तराङ्गरक्षकस्थगिकावित्तसौविदल्लमहामल्लप्रतीहारमहामात्राश्वारोहसारथिकथकनर्त्तकदूतादयोऽनेककोटिसङ्ख्याः, गङ्गासिन्धुदेव्यौ, खण्डप्रपाततमिस्रागुहादेव्यौ, मागधवरदामप्रभासतीर्थत्रयसुराः, हिमवद्गिरिऋषभकूटाधिष्ठायकौ सुरौ, इति चक्रिऋद्धिस्वरूपम् ।

प्रत्यहमित्याद्यपूर्वापूर्वतरसरसरसपरः सहस्राद्भुततमैतिह्यप्रबन्धश्रवणप्रमोदविस्मयाद्वैतप्रपूरितहृदन्तरालः क्षोणिपालः

पर्यन्वयुक्त दर्क्षं तत्क्षमुख्यं-भो महाभाग !, कथंकारमियत्यकारतचत्तीर्थमाहात्म्यादि विदांचकार भवानिति ?, सोऽप्याह-देव ! सोपारपुरे वसता सता गीतार्थयतीन्द्रेभ्यः श्रीमज्जैनश्रुतमहाकाननावगाहनपारीन्द्रेभ्यः सर्वमप्यदः शोश्रूयामाहे महादरेण मया, कुशलोदर्कसम्पर्ककर्कशः खलु साधूपास्यासङ्गः-सेवा देवादीनामपि चिरकालेन फलवती भवति । तत्कालमेव सद्गुरुसेवा तु सुरवल्लतिकेव ॥ १ ॥ तदुक्तम्-" सेविज्जइ सीहमुहा पाविज्जइ मुत्तिआ य गयदंते। जंबुअघरे अ लब्भइ खुरखंडं चम्मखंडं वा ॥ १ ॥" एवं साधुगुणव्यावर्णनामुभयाकर्ण्याकर्ण्य सकर्णः क्षोणीन्द्रोऽप्यक्षयनिधानमिव सुदुर्लभमायतिशुभमार्हतयतिषु बहुमानममानमेव वहति स्म, भवति हि सङ्गतिवशेनाचेतनानामपि तथापरिणामः, किं पुनः सचेतनानाम् ?, उक्तञ्च-" एके मेजुर्यतिकरगतास्तुम्बकाः पात्रलीलां, गायन्त्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः । एके केचिद्ग्रथितसुगुणा दुस्तरं तारयन्ति, तेषां मध्ये ज्वलितहृदया रक्तमन्ये पिबन्ति ॥१॥" एवं कोकाशसाहाय्यकाद्कस्माद्गमनवैरिविघ्नादिना महाबलानपि क्ष्मापान् गोपालानिव लीलयैव स्ववशीकृत्यैकातपत्रा धरित्री धरित्रीशेन तेन निर्मीयते स्म 'सामान्यस्याप्यसामान्यं, सख्यं सख्युः किमप्यहो ।जिग्ये प्लवगसाहाय्याद्वा रामोऽपि रावणम् ॥१॥' अन्येद्युरुद्यानान्तः समवसृतानां पञ्चशतीयतीश्वरपरिवृतानां निस्सीममहिमहिमवद्गिरीन्द्राणां श्रीधर्मानन्दसूरीन्द्राणां वन्दनार्थमत्यर्थमुत्कण्ठुलः महर्पुलस्थपतिपतिना सह महीपतिर्गच्छति स्मातुच्छतराडम्बरेण, गत्वा गुरून् सभक्ति नत्वा च निविष्टः शिष्टधीः सपरिवारोऽप्यसौ यथास्थानं, गुरुभिरपि प्रारेभे भव्यश्रवणयोः सुधारसवेशः श्रीधर्मोपदेशः, तद्यथा-' इच्छा सर्वत्र सर्वेषां, सुखे तत्पुनरैहिकम् । आमुष्मिकं च द्वेधाऽपि, धर्मात्सैन्यः स एव तत् ॥ १ ॥ विसंवदन्त्यपि फले, परे धर्माः पराब्दवत् । जैनधर्मः पुनर्नैव, पुष्करावर्त्तवत् क्वचित् ॥२॥ सोऽपि च साधुश्राद्धधर्मभेदाद् द्विभेद इत्यादि सविस्तरधर्मदेशनामति-

बुद्धमना महीजानिर्निजश्रद्धया श्राद्धद्वादशव्रतीं सम्यक्त्वमूलां यथाशक्ति प्रतिपद्यते स्म, तत्र च दिग्विरतिव्रते कोकाशकृतसान्निध्याद्बहून्यपि योजनशतान्येकाहेनापि गन्तुं शक्तोऽपि विविक्तचेता दिनं प्रत्येकस्माद् योजनशतादूर्ध्वगमनं नियमयति स्म, शमयति स्म च सुश्राद्धधर्मस्य सम्यग्वासनापूर्वस्वीकारमात्रादेव मात्राव्यतीतं चिरन्तनमपि दुष्कर्मरजः, उपबृंहयामाहे च माहेश्वरशिरःस्फुरद्दुरुसरिद्वारावारिपूरानुकारिहारिव्याहारविस्तरेण प्रकृत्याऽपि गुरुभिः श्रीगुरुभिस्तादृग्धर्मस्याङ्गीकर्त्ता भूमीभर्त्ता, यत उपबृंहणा धर्मलक्ष्म्याः स्थिरीकरणेऽमूलं मन्त्रमरज्जुशृङ्खलं च प्रबलं नियन्त्रणं, अत एव दर्शनाचारस्याङ्गभूता गीयते तत्त्वविद्भिरियम्, आहुश्च–" निस्संकिअ१ निक्कंखिअ२ निव्वितिगिच्छा३ अमूढदिट्ठी अ४। उववूह५ थिरीकरणे६ वच्छल्ल७ पभावणे८ अट्ठ ॥ १ ॥" एवं नृपतिरुपबृंहणावाग्धर्मरङ्गभृज्जगदे जगदेकवत्सलतमैः श्रीगुरूत्तमैः!–अहो! महानुभाग न हि गृहीतमात्रेण चिन्तारत्नेनेव धर्मेण चिन्तितार्थप्रदेनापि चरितार्थता, किन्तु विधिवदाराधितेनैव, जीवश्च प्रायः प्रमादबहुलः, विशिष्य च महाराज्यादिप्राज्यमहाव्यासंगसंगतत्वे सति, प्रमादश्च बहुयत्नसङ्गृहीतस्यापि सारस्य द्रव्यभावभेदाद् द्विविधस्यापि हुताशन इव हेलयैव संहारकारकत्वेन लोकद्वयेऽप्यत्यर्थमनर्थप्रदः, यदुक्तम्–" तस्यामेव हि जातौ नरमुपहन्याद्विषं हुताशो वा। आसेवितः प्रमादो हन्याज्जन्मान्तरशतानि ॥ १ ॥" तस्मादप्रमत्तचित्तेन निरन्तरमविस्मारकतया यथोपात्तः स्वव्रतधर्मः सम्यगाराधनीयः, न बाधनीयश्च क्वचनाप्यल्पतरेणाप्यतिचारमलेन, साधनीयश्चैवं गृहिणाऽपि सता भवता सुखेन मोक्षमार्ग इत्याद्यनुशिष्टिपीयूषवृष्टिसन्तुष्टहृदयः क्षोणिप्रियः स्वकीयमन्दिरमासाद्य परस्पराप्रतिबन्धेन पुरुषार्थत्रयमपि कृतार्थयाञ्चकार सर्वप्रकारपरमसुहृत्कोकाशेन साकम्, एवं सुखैकरसमये भूयस्तरसमये पुण्यमये समतिक्रान्ते सत्येकस्मिन्नहनि काष्ठतटप्रष्ठेन सत्रा धरित्रीसुत्रामाणं यशोदेव्याऽग्रमहिष्या सहितं सौपर्णेयमधिरुह्य कस्याञ्चिद्दिशि कौतुकालोकनाद्यर्थं प्रस्थातुमनसं मन-

सिकृत्य कृत्यापितया राज्या विजयाभिधानया राज्ञो द्वितीयदयितया प्रागपि प्रतिदिनसपत्नीबहुमानदर्शनप्ररूढसमधिकेर्ष्योत्कर्षया परिस्फुरदमर्षया चिन्तयाञ्चक्रे–यदयं विशामीशो वशीकृत इव महेश्वरो महादेवीमिव यशोदेवीमेव सहाकारयति न तु जातुचिदप्यनिष्टामिव मां, तदद्य तथा किञ्चित्करोमि यथा भूजानिरपि जानाति मदवज्ञाकृतेः फलमिति स्त्रीस्वभावसुलभया तुच्छचित्ततया तया मच्छन्नमन्यमेकं रथकारमाकार्याकार्यकारित्वेऽपि कार्यकारिमानिन्या प्रत्यागमनकीलिकास्थाने तद्रूपैवान्या कीलिका कारयामाहे, यत्प्रयोगेण प्रत्यावृत्य पश्चादागम्यते तां च क्वापि सुगुप्तीकृत्य कृत्रिमकीलिका तत्स्थाने तथैव स्थापयामाहे निष्प्रत्यूहं, यतः–" उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः । तत्र प्रत्यूहमाधातुं, ब्रह्मापि खलु कातरः ॥ १ ॥ " ततश्चोत्सुकचुरयाऽनवगतकीलिकाविपर्यासेन कोकासेन सार्द्धं प्राग्वद्गरुडाधिरोही धराधीशः साग्रमहिषीकः काञ्चिद्दिशं प्रति प्रातिष्ठत गगनाध्वना, यावच्चाचिरेणैव कालेन नवनवकौतुकालोकननवनवकिंवदन्तीकुतूहलकरणाद्याक्षिप्तान्तःकरणः क्षोणिरमणः प्रभूतमार्गमुल्लङ्घयांबभूव तावत्स्मृतिमार्गोपगतदिग्विरतिव्रतनियमेन तेन वर्द्धकिवर्यः पर्यनुयुयुजे ससम्भ्रमं–भोः प्रियमित्र ! कियन्मात्रमियता समायाता वयमिति ?, सोऽप्यनेकाभिज्ञानपरिज्ञाननिष्णातः तत्तदभिज्ञानदर्शनादिना निर्णीय क्षोणीन्द्रं प्रति प्रत्यभाणीत्–स्वामिन् ! इयता योजनानां द्विशती व्यतीयते स्म देवेन,तेन वचनेन च क्रकचेनेव व्यथितचित्तवृत्तिः क्षितिपतिः प्रजल्पति स्म–हंहो पश्चाद्वालय वालय निर्विलम्बमेतं वैनतेयं, शोचति स्म च–हे हे महैनःसङ्घविहिताक्षेपमहाव्याक्षेपविक्षिप्तमनसो मम नियमस्य मुधिकयैव कामकुम्भस्येव भङ्गो बभूव, धिग् धिग् महानर्थप्रवृत्तिं जन्तोरनवहितवृत्तिं, हा प्रकृतिमूढस्य जीवस्य मूढात्मताम्, अहह कुतूहलप्रियस्य प्राणिनः कुतूहलाक्षिप्ततया प्रमादादात्महितार्थस्यापि मुधैव विध्वंसनं, ही महीयस्तरेऽपि संसारे क्वचिदप्यप्राप्तपूर्वस्य सम्प्रति निष्प्रतिमतयाभव्यतपाकप्रकर्षेण प्राप्तस्य धर्मरत्नस्य निर्मलतमस्याप्येवं मालि-

न्यापादनमित्यादि गतसर्वस्व इवोच्चैः शोचति क्ष्माभृति स्थपतिपतिः पतत्रिपतेर्महापोतस्यैव गतिवेगं सोद्वेगं कथञ्चिन्निषिध्य पश्चाद्वालनाय कीलिकां करे यावद्गृह्णाति तावत्तामितरां निश्चित्य चिन्ताचान्तस्वान्तः क्ष्माकान्तमित्यूचे–देव ! दुर्दैववशाद्दुष्टेन केनापि कीलिका परावर्त्तयाञ्चक्रे, नियतमियं मामिका कीलिका न भवति, न च मामकीनां कीलिकामाकाशगमनशक्तिमिव विना विनतातनयोऽयं पश्चाद्गन्तुमलंभूष्णुः, अतः परं परंतपाधिपते ! अत्रैकमेवौपयिकमस्ति, यद्यग्रत एवासन्नदृश्यमाननगरान्तर्गम्यते तदा नव्यां कीलिकां क्वचन रथकारमन्दिरादौ निर्ममे, तत्प्रयोगेण च निष्पत्यूहं पुनः पश्चाद्गमनं स्याद्, अन्यथा तु नियतमत्रैव भूतलपतनाद्यनर्थो भावी जीवितस्यापि संशयकृदिति तदुदिते कुवैद्योदिते मुखमिष्टे परिणतिदुष्टे भैषज्य इव मोचकैररोचकितां हुंहुङ्कारकरणादिना दर्शयन्नुर्वीशस्तमब्रवीत्–आः किमिदं स्वात्मनोऽनुचितमवक्तव्यमश्रव्यमब्रवीः ?, विशुद्धधर्ममर्मस्पृशो भवादृशोऽपि यद्येवं धर्मविधिविध्वंसकं वचः प्रपञ्चयिष्यन्ति हन्त हता तर्हि निराश्रया सर्वापि धर्मव्यवस्थितिः, को हि नाम मूढात्मा प्रतिभवसुलभैहलौकिकजीवितव्यसुखाभिकृतेऽनन्तभवैरपि दुरासदं पारलौकिकपरमपाथेयभूतं स्वाभ्युपगतं धर्मं मरुस्थलान्तः कथञ्चित्प्राप्तकल्पशालमिव समूलमुन्मूलयेत् ?, यतोऽनाभोगव्याक्षेपादिना नियमभङ्गोऽपरिज्ञाय भूयानपि यदि भवेत्तदाप्यङ्गीकृतव्रतस्य मालिन्यरूपोऽतिचार एव, ज्ञात्वा तु स्वल्पेऽपि नियमभङ्गे स्वीकृतव्रतस्य भङ्ग एव, अतिचारेण खण्डितं च व्रतमपक्वकुम्भवत्सुखेन सन्धातुमपि शक्यं, भग्नं तु तत्पक्वकुम्भवत् केन कथं वा सुधियाऽपि सन्धीयते ?, किञ्च सचेतसां व्रतातिचारहेतुः प्रमादाचरितमेवात्यन्तमनुचितं, ज्ञात्वा तु नियमातिक्रमस्तस्यापि चूलिका, तस्माद्यद्भवति तद्भवतु परं प्राणान्तेऽपि पुरतः पदमात्रमपि गमनं सर्वथैव नानुमन्ये, प्रतिपन्ननिर्वाहस्यैव महतामुचितत्वात्,–प्रतिपन्नस्य निर्वाहो, महतामिह लक्षणम् । प्रतिपन्नेऽपि शैथिल्यमितरेषां तु लक्षणम् ॥ १ ॥' जलधूलिधरित्र्यादिरेखावदितरेपकाम् । परं पाषाणरेखेव, प्रति-

पर्व महात्मनाम् ॥ १ ॥ यदुक्तम्–“ दिग्गजकर्मकुलाचलफणिपतिविधृतापि चलति वसुधेयम् । प्रतिपन्नमचलमनसां न चलति पुंसां युगान्तेऽपि ॥ १ ॥ ” अत उपायान्तरचिन्तां परिहृत्य पश्चाद्वालनाय परावर्त्तितामप्येतामेव कीलिकां प्रयुङ्क्ष्व, जातु दैवयोगादनयाऽप्ययं गरुत्मान् कियन्मात्रं चलतीति, एतच्च क्षितिभर्त्तुरुक्तं भाषितं श्रुतिगोचरीकृत्यात्यन्तचमत्कृतचित्तः रथपतिर्विज्ञानातिशयवित्तः कटरि कटरि धरित्रीशस्य धर्मदार्ढ्यं वपुरे वपुरे निरुपमसात्त्विकत्वं कट कट निष्कपटवृत्तः स्वजीवितेऽपि निरपेक्षता अहो ! अहो ! महोत्साहता स्वोपात्तव्रतपालनायेत्यन्तः प्रशंसापरस्तादृग्दृढधर्मणः क्षोणीशस्य नियमातिक्रमकृत्पुरस्ताद्गमनविषयोपदेशप्रदानत्रपासम्पर्कादवाङ्मुखोऽनन्यगतिकतया दैवपरतामवलम्ब्य प्राङ्नियुक्तां गमनकीलिकां निष्कास्य यावत्परावर्त्तितां तां पक्षिमुख्यस्य पश्चाद्वालनाय प्रयुङ्क्ते तावन्मिलितपक्षयुगेन वज्रिवज्रच्छिन्नपक्षयुगेन पर्वतेनेव सहसैव नभस्तलात् प्रपतयालुना पक्षिस्वामिना सहैव दुर्दैवविलसितवशाद्वर्षीयाख्रयोऽपि हाहाकारपराः पराङ्मुखभूता इवाधस्तादपप्तन, परं पुरातनकिञ्चिच्छुभकर्मयोगेन सरोवरनीरोपरि पतनादखण्डितापीडितसमग्राङ्गोपाङ्गः प्रतरणे नदीष्णत्वेनादीनवृत्त्यैव वारिचर इव तरंतस्तीरदेशमासेदिवांसस्ते, यतः–“ वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा, रक्षन्ति पुण्यानि पुरा कृतानि ॥१॥” तत्र चासन्नमेकं नगरं निरीक्ष्य क्षोणीन्द्रस्तं दक्षलक्षणमित्याचचक्षे–सखे ! सर्वाङ्गीणश्रीभङ्गीभिरुत्तरङ्गीकृताभ्यन्तरं किमभिधानमिदं नगरं ?, सोऽप्यभिज्ञानैः कैश्चिदभिज्ञायाभिज्ञाग्रणीः प्रत्यभणीत्–देव ! देवमातृकतानदीमातृकताघनगुणगौरवश्रीसकलकलिङ्गाभिधानजनपदपद्मापद्माक्षीकाञ्चननूपुरं काञ्चनपुरं नामैतत्पुरम्, एतच्च सर्वपुरप्रधानं कनकप्रभाभिधानस्य कलिङ्गराजस्य राजधाम, कलिङ्गाधिपतिश्च सर्वत्र सातिशयमानी प्रकृत्यापि नित्यमभिमानी देवेनासह्यमहसा प्रसह्य कथञ्चिद्विजाज्ञां मान्त्रिकेण दुष्टफणीव दुर्ग्रहोऽपि ग्राहयामाहे, अभिमानिनश्चापमाननमनुपम-

आ० प्र० मनस्तापहेतुः, यदुक्तम्—" तरुणजनो निर्विभवस्तरुणी विधवा गुणी निरनुभावः। अपमानितोऽभिमानी यद् दुःखं वहति तद-
दर्शनाचारः नुपमम् ॥ १ ॥ " तद्दुःखदूनश्च स सम्प्रति देवपादान् प्रति जातु हार्दसौहार्दमपि दर्शयति तदापि न विश्वासार्हः, यतः—
॥ ४१ ॥ " न विश्वसेत्पूर्वविरोधितस्य, शत्रोश्च मित्रत्वमुपागतस्य । दग्धां गुहां पश्यत घूकपूर्णां, काकप्रदत्तेन हुताशनेन ॥ १ ॥ "

तस्माद्यावन्निभृतवृत्तिर्नगरान्तर्नत्वा सूत्रधारशस्त्रैर्नव्यां कीलिकां निर्माय पश्चादत्रागच्छामि तावताऽत्यन्तमवहितवृत्त्या वृक्षव्रतत्याद्यन्तरितैः सदेवीकैर्देवपादैस्तथा स्थेयं यथा कोऽपि न वेत्तीत्यादिदृढोक्तिपुरस्सरमेतत्पुरान्तर्न कश्चिन्मामुपलक्षयतीति निःशङ्कमेव मध्येपुरं कस्यचिद्वर्द्धकेर्गृहासन्नवाह्यकुड्यां गत्वा रथचक्रघटनार्थं सज्जीभूतस्य तस्य सकाशात्कोकाशः कीलिकाघटनार्थमुपकरणानि विशिष्टानि कानिचिद्याचितवान्, सोऽप्यन्तः स्वगृहं तदानयनाय यावद्ययौ तावद् घटनविज्ञानैकरसिकतया तन्निष्पिपादयिषितं चक्रं तत्क्षणादेव निष्पादयामास कोकासस्तादृशं यादृशं स्वयमूर्ध्वं तिष्ठति करान्मुक्तं च सद् दिव्यचक्रमिव स्वयमेव परिभ्रम्यत्पुरतो याति तावद्यावत्कुड्यादि, कुड्यादिप्रतिहतं च पुनस्तथैव पश्चादायाति,अहहाऽसमञ्जसः कोऽपि कलाकौशलरसः यत्परवशः प्राणी स्वहिताहितार्थमपि न परिभावयति । यो यत्र हि कौशलभृत्तद्योगेऽसौ प्रवर्त्तते परवान् । वैरिपुरे कोकाशः कुतोऽन्यथा चक्रमकृत तथा ? ॥ १ ॥ यद्वा— यो यत्र हि कौशलभृत्तद्योगेऽसौ प्रवर्त्तते परवान् । नो चेत्किं सौमित्रिः शम्बूकवधं मुधा व्यदधात् ? ॥ १ ॥ तस्मिंश्च चक्रे परीक्षार्थं परिभ्रमयति
सति कोकाशरथकृति सोऽपि वर्द्धकिरानायितोपकरणान्यानीय यावत्तत्राजगन्वान् तावत् तावत्समयमध्ये तादृक्ष- कोकाश०
मसदृक्षं तच्चक्रमाश्चर्यचक्रमिव साक्षान्निरीक्ष्य दक्षतया चिन्तयामास—नियतमयमनयाऽनन्यसामान्यया कलया कोकाश एव कारागार०
भवति, न हीदृग्निस्तुलकलावान्निखिलेऽपि क्षोणिमण्डले कोऽप्यन्यो दृष्टपूर्वः श्रुतपूर्वो वा, इमं चातिमौढ्यद्विद्वेषिवयस्यमत्रागतं ॥ ४१ ॥

यदि राज्ञे निवेदयामि तदा नियतमत्यन्तं महीशस्य महीयःप्रसादपात्रीभवामीति दुर्धीर्दुध्याय कोकाशं च स्वपुरुषैः सुरक्षितं विधाय धराधीशस्य सविधे विधेयतया समुपेत्य विज्ञपयामास–देव ! देवभाग्याकृष्ट इव वर्द्धकिग्रामणीरनणीयःकलानिलयः कोकासाह्वयः कुतोऽपि मम सद्मनि समेतोऽस्ति, यत्कृतगरुडस्य गुरुपोतस्येव बलेन काकजङ्घनृपतिः पोतवणिगिव दुर्गृहा अपि सुग्रहा इव राज्यादिका दूरदेशान्तरसम्पदः स्ववशीकरोतीति, तच्चोत्कर्णमाकर्ण्य साधु साध्वित्यभिधायिना भूजानिना निजपुरुषैः परुषत्वरया कोकाशः स्वसकाशमानाय्य प्राज्यबन्धैः क्रौञ्चबंधं बन्धयित्वाऽत्यर्थकदर्थनाव्यापादनादिभयदर्शनपूर्वं कुत्र काकजङ्घोऽस्तीति सरोषपोषं पृष्टः पटिष्ठधीः किञ्चिदन्तश्चित्तं विचार्य कार्यविद् यथावदेव नृदेवस्थितिस्थानाद्यकथनीयमपि कथयामास, को वा शुद्धबुद्धिस्पृशां तादृशां हृदयस्योदधेरिवागाधतां बुध्यते ?, ततः कनकप्रभनृपः प्राप्तत्रिभुवनैश्वर्यप्रकर्ष इव प्रहर्षुलः पुलकोच्छ्वसद्वपुः मोन्मत्तः कृतान्त इवोद्भटैः स्वसुभटैः सह सहसैव स्वयं विनिर्ययौ निजगृहात्काकजङ्घनृपं निग्रहितुं, तं च तथाविधं महाव्याधमिव क रे क रे वराकः काक इव नष्टः काकजङ्घ इत्यादि यत्तदुच्चावचवचांसि विप्लुवन्तमभिधावन्तमु-द्वीक्ष्य किमेतदत्याहितमित्यतिव्याकुलात्मानौ राजा राज्ञी चोभावपि यावत्त्रासाकुलकुरङ्गकुरङ्गिकातुलतामालम्बाते तावद्धाव-त्प्रकलिङ्गाधिपभटैर्मयूरिकाबंधं बध्वा वन्दिग्राहं गृहीतौ, कलिङ्गेशेन कलितकोपावेशेन नानाकुवाद्यवादनादिविडम्बनापूर्वं पुरा-न्तरानाय्य काष्ठपञ्जरान्तः अक्षेपेणैव क्षेपयाञ्चक्राते, चिन्तयाञ्चक्रतुश्चान्तश्चित्तम्–आः किमेतदखिलखलेभ्योऽप्यतिशयाद्ध खलायितं तयाऽननुभूतवरस्य रथकारवरस्य, कथङ्कारमन्यथा गुप्तस्थितयोरप्यावयोरित्थङ्कारमियं सहसैव विडम्बना स्यात् ?, आः किमिदं पानीयात्प्रदीपनं आः किमिदममृतरश्मिमण्डलादङ्गारपरिगलनं ?, यद्वा किं नामात्र तस्य दूषणं ?, किन्तु किञ्चिदस्मद्दुष्कर्मविलसितमत्र येन तस्य सुजनस्याप्येवं दुर्जनस्येव दौर्मनस्यं प्रादुर्भाव्यते, यतः–"अवश्यभव्येष्वनवग्रहग्रहा,

यया दिशा धावति वेधसः स्पृहा । तृणेन वात्येव तयाऽनुगम्यते, जनस्य चित्तेन भृशावशात्मना ॥ १ ॥" इत्यादिचिन्तार्दितस्वान्तौ जन्मतोऽप्यप्राप्तपूर्वपराभवादिदुस्सहदुःखाक्रान्तौ तौ सातिशायिमानसव्यथं कथञ्चित्काष्ठपञ्जरान्तरतिष्ठतां, क्रोधाध्मातचेतोऽभ्यन्तरः कलिङ्गेश्वरश्च तयोस्तदवस्थयोरन्नमात्रमपि न दत्ते, ततः प्रत्यासन्नस्थायिनो जनाः सानुकम्पमनसः कनकप्रभभूभुजो भिया वायसदानपुण्यनिमित्तव्यपदेशेनान्नपिण्डिकां प्रतिदिनं ददते, ततः प्रभृति वायसपिण्डिका पुण्यनिमित्ततया जने प्रवृत्ते, न हि लोकस्तात्त्विकप्रवृत्तिः, एवं वायसपिण्डिकयाऽपि प्राणधारणां कुर्वाणः सदेवीकोऽपि क्ष्मारमणः समयमत्यवाहयत्, अहह महत्तमानामपि अनीदृशी काचिदीदृशी दुर्दशा, यद्वा भवस्थितेः पर्वतोर्वीपयःस्थितेरिव स्थपुटत्वं प्रकृतिसिद्धमेव, यदुक्तम्–" को इत्थ सया सुहिओ कस्स व लच्छी थिराइं पिम्माइं । को मच्चुणा न गसिओ को गिद्धो नेव विसएसु ? ॥१॥" अन्येद्युः कलिङ्गधराधीश्वरेणायमेवानर्थमूलमित्युच्चैः क्रोधोद्धुरेण कोकासः सर्वस्वापहारी दस्युरिव वध्यतया समादिष्टः, तद्भटैः सविडम्बनं पुरान्तः पशुरिव वधस्थानमानीयमानः किञ्चित्प्राच्यशुभकर्मवशेन सानुकम्पं पौरजनैर्दृष्टः, ततस्तैः सम्भूयभूयस्तरानुरोधपुरःसरं कलिङ्गनायको विज्ञपयामाहे– महेश ! महेशशैलश्रीविलासपरिहासकारिविशदयशःप्रसरधारिणां सर्वदापि समीक्ष्यकारिणां प्रतीक्ष्यपादानां केयमसमीक्ष्यकारितेतरजनोचिता ?, न ह्यसमीक्ष्यकारिता किम्पाकफलास्वादनक्रियेव परिणतिहिता, यतः–"'शल्यवह्निविषादीनां, सुकरैव प्रतिक्रिया । सहसाकृतकार्योत्थानुतापस्य तु नौषधम् ॥ १ ॥" देव! दैववशाल्लब्धमेवंविधकलापात्रं कामकुम्भमिव कामितार्थसाधकं कः सुधीः क्रुधा मुधा विध्वंसयेत् ?, कलावन्तो हि सर्वसाधारणवृत्तयः, न हि तेषु गुणप्रधानेषु प्रसूनेष्विव स्वपरविभागचिन्तनमौचितीचञ्चुतामञ्चति,–सर्वेषां बहुमानार्हः, कलावान् स्वः परोऽपि वा । विशिष्य च महेशस्य, महीयोमहिमास्तिकृत् ॥ १ ॥ अमृतहिमात्मकरेण हि, कलावतैवौषधीप्रिय-

तमेन । विपत्तिविषधरानपि धरन् हरः परसुखः सततम् ॥ २ ॥" तस्मादेवंविधः कलावान् सबहुमानं स्वसन्निधौ तथा स्थाप्यते यथा तत्कृतकलातिशयेनापरनरेश्वरेभ्यो देवपादानां ग्रहपतेरिवापरग्रहेभ्यस्तेजोऽतिशयेनातिशयालुता भवतीति पौरैः परिबोधितः क्षितिदयितः स्वपुरुषैरपरपथ्यया कोकाशमात्मनः सकाशमानाय्य पर्यन्वयुङ्क्त—अहो वैज्ञानिकप्रधान! चमत्कृतिनिधानं किं किं विज्ञानं विज्ञानन्दकृज्जानासि? इति, तेनापि निगद्यते स्म—देव! देववर्द्धकिवर्द्धकिविज्ञानं निःशेषमपि सातिशेषविशेषमहमयगमिकर्मीकरोमि, ततः क्षितिपुरुहूतेन प्ररूपयामाहे—तर्हि भोः कलाकुशल! कुरु कमलाकारं नाम मद्योग्यं मन्दिरं, तस्मिंश्च शतदले कर्णिकापदे मद्योग्यं भवनं, शतप्रमाणेषु दलेषु च मत्पुत्रशतयोग्यानि भवनानि निजनिस्तुपस्तुपगानिर्जितनिर्जरभवनानि विनिर्माहि, तत्र च तं कञ्चित्कलातिशयं प्रदर्शय येन त्रिजगत्यपि निःसपत्नभवनसमृद्धता मम भवतीति, अथादेशः प्रमाणमिति प्रतिपेदानं वर्द्धकिप्रधानं नियन्त्रणादि पारवश्यमपास्य तदर्हकाष्ठानयनाद्यर्थं ससन्मानं कलिङ्गेशः समादिदेश, ततः सञ्जातजीवितप्रत्याशः कोकाशः किञ्चिद्गूढाशयः कलिङ्गेशादिष्टविशिष्टसौधविधानायोपक्रममाणः प्रमाणातिक्रान्ताकुण्ठोत्कण्ठया काकजङ्घमहीशेन सञ्जिगंसुरपि कलिङ्गेशादेशाभावात् सङ्गन्तुमशक्नुवन् सुगुप्तस्थितस्य सपत्नीकस्य ममानेनाग्रे रिपुनृपस्य स्थानकथनादि दौर्जन्यमजन्यमिवासमञ्जसं किमिदमत्यन्तमनुचितमाचरितमिति विमनायमानं स्वस्वामिनं सम्भावनया विज्ञाय विज्ञावतंसस्तद्वैमनस्यव्यपोहाय कस्याप्याप्तस्य हस्तेन साक्षाद्रूपं स्वाभिप्रायमिव पद्यमेकं प्रजिघाय, तच्चेदम्—

'कर्कशकर्मणि भिषजा विहिते मा मन्द! दुर्मनायिष्ठाः। सपदि गुणायैव तवैतद्भविता निश्चिनुष्वेति ॥ १ ॥' इत्यन्योक्तिसुव्यक्तधीर्वाचितपूर्वी काकजङ्घ उर्वीशो नूनमनेन प्रकृतिसुजनेन स्वस्य कलिङ्गेशादेशसञ्जातबन्धनक्लेशादनु बहिःस्थितस्य मे वधादिकमप्यनर्थमाशङ्क्य हितार्थमेवेत्थं मध्येपुरमानयनं सुधिया व्यधीयत, अनया चान्योक्त्या बुध इव सन्निहितोऽसौ

राहुग्रासाचन्द्रमसमिव मामपुष्मात् दुष्क्लेशवैशसात् कथञ्चिन्निश्चितं मोचयितेति निश्चितवान्, निश्चिन्ततया समयाकरोति स्म । इतश्च कश्चित्स्वस्वामिमोचनोपायमायतिहितमालोचितपूर्वी कलिङ्गोर्वीशनिर्दिष्टगतिविशिष्टप्रावासं चक्रवर्त्यावासमिव प्रवररचनातीतस्फीतसुपमानिवासमाशु यावत्करोति कोकाशस्तावद्दीपिकाधारकपुरुषेण प्रकृत्या सत्पुरुषेण मा मुधा पुरुषरत्नस्य विनाशो भूदित्यतः कलिङ्गाधिपतिगूढमन्त्रः कोकाशाय प्रकाशयाम्बभूवे, भो वैज्ञानिकस्वामिन्! तव स्वामी काकजङ्घः कलिङ्गस्वामिना स्वसमीहितहर्म्यनिर्माणावधि मा तव वैमनस्यात् कश्चन विघ्नो भूदिति जिघांसितोऽपि न हतो, नव्यत्व-न्निर्मितवेश्मप्रवेशमुहूर्त्तकरणानन्तरं नियतं तस्मिन्नेवाहनि हनिष्यते इति, तद्वचः कर्णक्रकचमिवाकर्ण्य दुर्द्धरक्रोधोद्धुरः सूत्रधारधुरन्धरः सकलिङ्गेश्वरमपि तन्नगरं प्रध्वंसितुकामस्तत्कालमेव प्रहितप्रणिधिपुरुषेण सारपरीवारं विजयं नाम काक-जङ्घनृपतनयं सुनिभृतवृत्त्या यथास्थितवृत्तान्तनिवेदनपूर्वमतित्वरया समासन्नमाकारयामास, सोऽपि स्वपितृवैरनिर्यातनार्थ-मुद्यतमनाः स्वल्पमपि अनल्पस्वामिकृत्यचतुरं चतुरङ्गचमूचक्रं पुरस्कृत्य कृत्यविद् गुप्तवृत्त्यैव कथंचन काञ्चनपुरप्रत्यासन्नमागत्य दैत्य इवालक्षितस्वरूपस्तिष्ठति स्म, अथ च रथकृत्प्रवरेण विचित्रचित्रधाम्नि तस्मिन् पद्माकरनाम्नि प्रासादे निस्तुलयमङ्गल्य तोरणादिसमग्रसामग्रीके सम्पादिते प्रमुदितः कलिङ्गक्ष्मादयितः प्रशस्ते मुहूर्त्ते महोत्सवपुरस्सरं पुत्रशतसहितः सुपर्वप्रवरग-रिष्टसौधर्म्यां सौधर्मेन्द्र इव प्रवेशमारचयामास विलोकयामास च सातिशयस्मयव्याकुलः सकलमपि तं प्रासादं, प्रशंसयामास च प्रसाददानसन्मानपूर्वं तमेवम्—अहो ! अदृष्टचरी अश्रुतचरी असम्भावितचरी तव काचिद्विज्ञानचातुरी, यद्वा रत्नगर्भायां किं नामासम्भाव्यम् ?

यतः—" दाने तपसि शौर्ये च, विज्ञाने विनये नये । विस्मयो नैव कर्तव्यो, बहुरत्ना वसुन्धरा ॥ १ ॥ "

इतश्च गूढाभिसन्धिः सुधीरनेताः स्थपतिनेता कलिङ्गनेतारमेवं व्याजहार– देव ! महत्तरेऽप्यस्मिन् प्रासादवरे एकस्तम्भधवलगृहे एकस्तम्भ इवैकैव कीलिका, तया च सुप्रयुक्तयाऽयं प्रासादावतंसस्तदानीमेव दिव्यविमानावतंस इव व्योम्न्युत्पतिता, ततस्तत्कौतुकालोकनरसिकः कलिङ्गस्माकौशिकस्तदुदितमतात्त्विकमपि भ्रान्तस्वान्त इव तात्त्विकमेव मन्यमानः ससन्मानमिदमादिशति स्म कोकाशम्–अरे ! हृदयेप्सितविज्ञानविरचनाचास्तोऽप्रतिस्थपतिप्रतिविकाश कोकाश ! दर्शय तर्हि सम्प्रत्येव तत्कौतुकं येन तद्दर्शनार्थं पुरपुरन्ध्रिदर्शनार्थमाजन्मप्राप्यस्यैवास्माकं मानसमत्युत्सुकं, ततः कौतुकं किमप्यपूर्वतरं तव सपुत्रस्यापि सद्य एव दर्शयिष्यामीत्यन्तर्भुवन् सोल्लासः कोकाशः प्रकाशयामास वाग्विलासमेवं नृपासवं प्रति–देव ! देवपादाः शतं सुतवराश्च सतारकस्तारकपतिरिव स्वं स्वं स्थानकमलङ्कुर्वन्तु; यथा तत्कालं कीलिकाप्रयोगेण कौतुहलं निस्तुलं दर्शयामीति, ततश्च महादुर्भिक्षक्षुधिता रङ्का इव निःशङ्का एव भोजनार्थमिव कौतुकालोकनार्थमत्यर्थोत्कलिकाविशेषेण दमदमिकां नाटयन्तो झटित्येव नृदेवः सर्वेऽपि तदुद्दिष्टाहंप्रथमिकया स्वस्वसौधमध्यमध्यासामासुः; ततः स शिल्पसिद्धः सिद्धप्रायगूढाभिप्रायः कारागारादिव तस्मादगारात् स्वयं निःसृत्य पश्यत रे मूढाः ! स्वकगूढाशयस्य मत्प्रभुकाकजङ्घजियांसारूपस्य किम्पाकपादपस्येव परिपाकदारुणं फलमित्युक्तिसमकालमेव कीलिकां उद्युक्ततया प्रायुङ्क्त, तत्प्रयोगाच्च तत्कालमेव निमिमील निद्रालुनेत्रलीलया स सकलोऽपि प्रासादः, ततस्तदन्तर्गतः सपुत्रोऽपि धात्रीपतिः पृथुतत्तन्मनोरथोऽपि हाहारवमहाक्रन्दपरः करिकलभसमूलोन्मूलितनिमीलितकमलकुड्मलान्तःस्थितदुःस्थितमन्दाक्रन्दव्याकुलभसलतुलनामालम्बते स्म, उक्तं चान्योक्तौ–

" रात्रिर्गमिष्यति भविष्यति सुप्रभातं, भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
एवं विचिंतयति कोशगते द्विरेफे, हा हन्त हन्त नलिनीं गज उज्जहार ॥१॥

इतश्च कोकाशेन सङ्केतितः काकजङ्घनृपतनयो विजयाह्वयोऽभिषेणितोऽतर्कित एव मलयकालजलद इव कलिङ्गाधीश्वरनगरविध्वंसनाय सन्नद्धो धावति स्म, ततस्तत्तादृशमुभयतोऽप्यसमञ्जसमालोक्य व्याकुलतरे हाहारवबुंबारवाक्रन्दरवमुखरितदिगन्तरे निखिलेऽपि नगरे कलिङ्गेशसेनानीः सेनान्वितः सत्वरमेव पुरद्वारमागतः, भोद्दण्डगण्डशैल इव शैवलिनीं विजयवरूथिनीं पुरान्तःप्रवेशिनीं क्षणं स्खलयाम्बभूव, तत्र च क्षणमात्रममात्रपराक्रमैः प्रस्फुरद्वीररसातिरेकं सङ्क्रमैरक्रमेणैव शराशरि कुन्ताकुन्ति दण्डादण्डि खड्गाखड्गि शक्ताशक्ति पट्टिसापट्टिसि मुद्गरामुद्गरि शल्याशल्यि शूलाशूलि चक्राचक्रि यष्टायष्टि मुष्टामुष्टि केशाकेशि बाहूबाहवि कूर्पराकूर्परि कराकरि स्कन्धास्कन्धि शीर्षाशीर्षि पादापादि च दुर्द्धरक्रोधैरुभयैरपि महायोद्धैर्युद्धं विदधीयामाहे, परं 'हतं! सैन्यमनायक' मिति कलिङ्गेशसेनापतिसेनायां श्रान्तपथिकवृन्द इव मन्दमन्दं मन्दायमानायाममन्दतममोजायमाना विजयकुमारसेना ससेनापतिः पर्वतनदीव जङ्गमा समग्रमपि कलिङ्गेश्वरनगरं मृद्भाण्डध्वंसं दध्वंसे, तद्ध्वंससमकालमेव विजयकुमारः सारपराक्रमः परमकृच्छ्रागारात्काष्ठपञ्जरागारात् मातरपितरौ नरकादिव निष्कास्य ताभ्यां स्वबुद्धिप्रपञ्चसिद्धिसम्पन्नस्वान्तसमुल्लासेन कोकासेन च साकमनाकम्पमनाः प्रदीपनादिव तन्नगरान्निर्गत्य परितश्चतुरङ्गचमूवृतस्त्वरितत्वरितमेव क्षेमेण निजनगरासन्नमाजग्मिवान्, प्रविष्टवांश्च महीयसा महेन सवर्द्धकिवरौ स्वपितरौ पुरस्कृत्य स्वपुरं, ततः काकजङ्घनृपतिः कृतज्ञचक्रवर्त्ती परमोपकारिणे कोकाशायागणितमणिसुवर्णादिकामतिप्रभूतामत्यद्भुतां विभूतिं सहस्रशः सहस्ररश्मिरथ्योपमांस्तरलतरतुरङ्गमान् शतशश्च शतकोटिपाणिकरटीन्द्रश्रीलुण्टाकधुरन्धरान् सुदुर्द्धरान् गन्धसि-

न्पुरान् सर्वाङ्गीणसमृद्ध्यभिरामान् प्रभूततमान् ग्रामांश्च प्रदत्तवान्। एवं परमसमृद्धिमौढिम्ना स्वसन्निकाशं कोकाशं स उर्व्वीशः कृतवान्, को हि कृतज्ञमन्यः कृतोपकृतेः परस्य प्रत्युपकृतये सर्वशक्त्या न प्रयतते ?, 'उच्छिष्टाशनमात्रान् मात्रातिगवां कृतज्ञतां पश्यन्। शुनकेऽपि सर्वहीने कृती कृतज्ञः कथं न भवेत् ? ॥ १ ॥" स्वामिना च विशेषतः कृतज्ञेन भाव्यम्। यतः-"कृतज्ञस्वामिसंसर्गमुत्तमस्त्रीपरिग्रहम्। कुर्वन् मित्रमलोभं च, नरो नैवावसीदति ॥ १ ॥ यद्यपि कश्चित्किञ्चिन्न वदति न च जातु तुदति मर्मोक्त्या। नित्यं शङ्कितचेता अकृत्यकृत् तदपि नियतं स्यात्॥ २ ॥" इति, स्वयमेवात्यन्तिकाशङ्कितहृदयाया विजयाया सुकीलिकापरावर्त्तादि तादृग् दुश्चेष्टितं प्रागपि सपत्नीर्ष्यया सम्भावितं तादृक्चेष्टितदर्शनादिना तदा निष्टङ्कितमपि च न क्वापि प्रकटितं गाम्भीर्यगुणाकरेण क्षोणीश्वरेण, यतः-'अर्थनाशं मनस्तापं, गृहे दुश्चरितानि च। वञ्चनं चापमानं च, मतिमान् न प्रकाशयेत् ॥ १ ॥' न च तस्यास्तद्विषये रोपसफलता सफलरोपेणापि तेन प्रदर्शयाञ्चक्रे, किन्तु तत्त्वज्ञतया स्वचेतसीति चिन्तयाञ्चक्रे-ईर्ष्यालुप्रकृतिः प्रायः सर्वापि स्त्रीजातिः "अवञ्चको वणिग् विप्रः, सन्तोषी क्षत्रियः क्षमी। वायुः स्थाण्वुरनुष्णोऽग्निर्योषाऽनीर्ष्या च किं क्वचित् ? ॥ १ ॥" इतश्च काञ्चनपुरे सुगुप्तकीलिकामुद्रितं तं पञ्चापरसौधमुन्मुद्रयितुमक्षमा मन्त्र्यादयः सपुत्रनृपकर्षणेप्सया विदारयितुं यावत्कुठारादिघातान् दापयन्ति तावत्तत्सौधमध्ययन्त्रप्रयुक्तैकाग्रशतकाष्ठघाताहतैः शिरसि पतद्भिः स्वयमुत्पतद्भिश्च दोदूयमाना मानातिगाक्रन्दं पक्षिण इव पञ्जरक्षिप्ताः क्षितिपस्तनयाश्चात्युच्चैश्चक्रीयाञ्चक्रिरे, ततः स्वस्वामी यथाकथञ्चिदपि रक्षणीय एवेति विमृश्याऽनन्यगतिकाः प्रधाननरास्त्वरयैवोज्जयन्यामागत्य प्रणत्य कोकाशं स्वस्वामिजीवितभिक्षामत्यर्थोपरोधात् प्रार्थयामासुः,ततः प्राप्तावकाशः कोकाशः कलिङ्गेशस्य गृहदासस्येव नित्यसेवाकारितां तान् प्रतिपाद्य सद्यस्तत्पुरं गत्वा कीलिकाकर्षणेन तदाशाभिः सह तद्भवनमुन्मुच्य कण्ठगतप्राणितं

आ० प्र० दर्शनाचारः ॥ ४५ ॥

सुतसहितं काञ्चनपुराधिपतिं तस्माद्भवावासादिव निष्काशयामास, सोऽपि सपुत्रः पुनर्नवजीवितंमन्यः स्थपतिरतिं पितरमिवा-
राधयंस्तदुक्त्या पत्तिवन्नित्यमेव सिषेवे मालवेशं, ढौकयामास च पद्माकरसद्मापि काकजङ्घनृपाय, अहह निस्तुलं कोकाशकौशलं
येन हिंसाद्यनर्थं विनापि बद्धस्वस्वामिमोचनस्वकलातिशयदर्शनवैरिवशीकरणादि समपादि, यद्वा धर्मैकाग्रतायुजस्तस्य भूभुजः
कथमिव विषममपि न समीस्यात् ? ।

अन्यदा तत्रागतश्चतुर्ज्ञानी मुनीशः, पृष्टश्च वन्दनादिविधिना स्वकोकाशयोः प्राग्भवं भूविभुना, सोऽप्यूचे-राजन् !
गजपुरे त्वं राजा जैनोऽभूः,कोकाशश्च जैनविप्रस्ते प्रसादपात्रं सूत्रधारः, तद्वचसा त्वयाऽनेके जैनप्रासादा जीर्णोद्धाराश्च कारिता
नानारत्नादिमय्यो जिनार्चाश्च, यतः–'भवणं जिणस्स न कयं, न य बिंबं नेव पूइआ साहू। दुद्धरवयं न धरिअं, जम्मो परि-
हारिओ तेहिं ॥ १ ॥' सूत्रधारेण च तत्र नृपोक्तादधिकतरा नवनवरूपशोभादिरचना विरचयाञ्चक्रे धर्मधिया, 'कला
कलावतः सैव, श्लाघनीया मनीषिणाम् । या श्रीसर्वज्ञसुपर्याहेतुत्वेनोपयुज्यते ॥ १ ॥' सकृज्जातिमदश्च तेन चक्रे,
अन्यदैकः कलाछेकः समृद्धजैनसूत्रधारः कुतोऽपि नृपान्नष्टस्तत्रागतः कलामात्सर्यात् पैशुन्येन राज्ञोऽज्ञाप्यत, 'कलावान्
धनवान् विद्वान्, क्रियावान् नृपमानवान् । नृपस्तपस्वी दाता च, स्वतुल्यं सहते न हि ॥ १ ॥' कर्णदौर्बल्यात्तेन
राज्ञापि स धृतः षड्घटिकाभ्योऽनु पश्चात्तापात् सूत्रधारेण मोचितः सत्कृतश्च, 'साधर्मिकाणां सत्कारस्तिरस्कारः किला-
पदाम् । तेषां पुनस्तिरस्कारः, पुरस्कारः सुदुर्गतेः ॥ १ ॥" तदनालोच्य नृपसूत्रधारौ सौधर्मे सुपर्वर्द्धिं भुक्त्वा च्युतौ
युवां जातौ, तादृगर्हद्भक्त्या तवैश्वर्यं कोकाशस्य च निस्तुलं कलाकौशलं जातिमदाद्दासीसुतत्वं चासीत्, मुधा षड् घटीः
साधर्मिकस्य धरणाच्च द्वयोर्नृप ! धरणं षण्मासीमासीत्, छोटनादिना छुटनादि च,'वाचिकं कायिकं मानसिकं कर्म पुरा कृतम् ।

कोकाशस्य प्राग्भवं० ॥ ४६ ॥

अवन्ध्यबीजवद्दत्ते, स्वानुरूपं पुरः फलम् ॥ १ ॥ अनालोचितशल्यत्वे, विपाकौग्र्यं विदन्नपि । बालो नालोचयेच्छल्य-महो बाल्यविजृम्भितम् ॥ १ ॥" इति ज्ञान्युक्तं श्रुत्वाऽनालोचितं पापमल्पमप्यनल्पविपाकं मत्वाऽनाभोगनिर्वर्तितं दिग्व्रतातिचारं सम्यगालोच्य श्रीगुरुदत्तं प्रायश्चित्तमाचरति स्म वेश्मप्राप्तः क्ष्माकान्तः, एवं निष्कलङ्कितस्वव्रतः कोकाशसहायकप्रगुणसर्वाङ्गीणकार्यसिद्धिश्चिरं भुक्तराज्यर्द्धिः समये स्वपुत्रराज्यप्रदानपूर्वमपूर्वमहोत्सवैः परिव्रज्य सप्रियाद्वयः स सौधर्मे सुखाद्वयमनुभूय भूयो नृभवे नृपीभूय सिद्धिसौख्यमनुभविष्यति । कोकाशस्त्वनश्वरशिल्पकलानिस्तुलत्वेनाकल्पमकल्पितनिजयशःप्रकाशः पृथिवीशेन समं निष्क्रम्य चिरायुश्चिरं चारित्रमाराध्य माहेन्द्रे सामानिकीभूतश्च्युत्वा सेत्स्यति, जिनमतकौशलजिनभक्तिनियमदाढर्येन दर्शनाचारे । ज्ञात्वा निदर्शनमिति प्रयतध्वं तद्विधौ सुधियः ॥ १ ॥ इति दर्शनाचारे कोकाशकाकजङ्घनृपोपाख्यानम् ।

दर्शनाचारश्चाष्टधा, यतः—" निस्संकिअ १ निक्कंखिअ २ निवितिगिच्छा ३ अमूढदिट्ठी अ ४ । उववूह ५ थिरीकरणे ६ वच्छल्ल ७ पभावणे ८ अट्ठ ॥ १ ॥ " तत्र निश्शङ्कितत्व—शङ्कारहितत्वं, तच्च देवगुरुधर्मविषये कार्य, तत्र देवं प्रति निश्शङ्कितत्वेऽम्बडपरिव्राजकपरीक्षितसुलसाज्ञातम् १ गुरुं प्रति तु श्रेणिकनृपः, स हि शक्रेण (यदा) सम्यक्त्वदाढर्ये श्लाघितस्तदा दर्दुराङ्कदेवः परीक्षार्थं तस्य यतिरूपं मत्स्यान् गृह्णानं दर्शयामास, तत्प्रश्नादिकाव्यं चैवमुक्तम्—' भिक्षो ! कन्था श्लथा किं ?, ननु सफरवधे जालमश्नासि मत्स्यांस्ते मे मद्योपदंशान् , पिबसि ननु ?, युतो वेश्यया, यासि वेश्याम् ? । दत्त्वाऽरीणां गलेऽङ्घ्री,क नु तव रिपवो ?, येषु सन्धिं छिनद्मि, स्तेनस्त्वं ?, द्यूत-

हेतोः, कितव इति कथं ?, येन दासीसुतोऽस्मि* ॥ १ ॥' नृपस्तु सुयुक्त्या तं न्यवारयत्, अग्रतः साध्वीं सगर्भां दृष्ट्वा सुयुक्त्योपालभ्य स्वगृहे सङ्गोप्य स्वयं सूतिकर्मादि रहश्चक्रे, एवं साधुसाध्वीदुष्टेत्तदर्शनेऽप्यनयोरेवानर्हत्वं शेषाश्चारित्रिणः पूज्या एव, नतु एकस्य दोषदर्शनमात्रेण सर्वेषां तदाशङ्का कर्तुं युक्ता, तथा सति धर्मे लोकेऽपि सर्वव्यवहारविलोपप्रसङ्गादित्यादिध्यायिने तस्मै तुष्टः सुरोऽष्टादशचक्रं हारं दिव्यक्षौमद्वयकुण्डलद्वययुतं च गोलकद्वयं ददौ, एवं गुरौ निश्शङ्कितत्वं कार्यं, धर्म्मे निश्शङ्कितताय़ां मुग्धभट्टाख्यानं–

यथा-कौशाम्ब्यासन्नशालिग्रामे दामोदरसोमासुतो मुग्धभट्टो द्विजः, तस्य यथार्थाभिधा सुलक्षणा प्रिया, तयोः सुखिनोः कियत्कालातिक्रमे पितरौ परासूबभूवतुः, क्रमाच्च पैतृकी लक्ष्मीः क्षीणा, यतः–" इंदिरा मन्दिरेऽन्यस्य, कथं स्थैर्यं विधास्यति ? । या स्वसद्मनि पद्मेऽपि, सन्ध्यावधि विजृम्भते ॥ १ ॥ " ततो नानाविपदापदं दारिद्र्यमागतम्, यतः–"निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रस्यते तेजसा, निस्तेजाः परिभूयते परिभवान्निर्वेदमागच्छति । निर्विण्णः शुचमेति शोकसहितो बुद्धेः परिभ्रस्यते, निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ १ ॥ " ततो ह्रिया प्रियामनापृच्छ्य निशीथे प्रच्छन्नं पुरान्निर्गतो, धनार्थी द्वादशवर्षीं विदेशे भ्रामंभ्रामं पश्चादागतः सम्यग्विनयावर्जननिरतां स्वदयितां पृष्टवान्–प्रिये ! एकाकिन्या त्वया द्वादशवर्षीं कथमतिक्रान्ता ?, कान्ताऽपि प्रोचे–प्राणप्रिय ! प्रकृतिवत्सलतमाविमलानामजैनमहा-

* सुभाषित रत्नभाण्डागारेतु इदमेव—६४-२८० भिक्षो कन्था श्लथा ते नहि शफरिवधे जालमश्नासिमत्स्यां, स्तेवै मद्योपदंशाः पिबसि मधु समं वेश्यया यासि वेश्याम् । दत्वाङ्घ्रिं भूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्तास्मि येषां, चोरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः ॥ १ ॥

सतीसमुपदिष्टविशिष्टतमतत्त्वरसनिमग्नया मया द्वादशहायनी द्वादशदिनीवातिवाह्यते स्म, सोऽप्यतिविस्मितः स्मितवाग् तामूचे-तत्तत्त्वं ममापि कथय येनाहमपि तथा सुखी स्याम्, ततस्तया जीवाजीवादितत्त्वेषु सम्यगुक्तेषु सोऽपि सुश्रावकोऽजनि, तौ च तद्ग्रामवासिमिथ्यादृग्विप्रैर्भृशमाक्रोशनेऽपि दृढं परमार्हतौ जातौ, अन्यदा स्फीतशीतभरैरस्ताघे माघे स्वपुत्रमादाय विप्रवेष्टितां धर्माचाग्निष्टिकां यावदागात् तावद्विप्रैः क्षिप्रमपसर २ पापिष्ट ! दूरतरमितिधिक्कृतो विलक्षः सा आचख्यौ- जिनधर्म्म एव सत्यो नत्वन्यः, यदि सोऽप्यसत्यः स्यात्तदैष पुत्रो ज्वलत्वित्युक्त्वा साहसी सहसैवाग्निष्टिकायां पुत्रं मुमोच,द्विजैर्हाहारवकरणेऽपि सन्निहितावहितशासनदेवतया च हुताशनः शीतश्चक्रे स्फुटीभूय श्रीजिनधर्मश्लाघा च,सा हि प्राग्भवे विराद्धव्रता- व्यन्तरीत्वमागता परभवे वोधिलाभार्थं पृष्टकेवलज्ञानिगिरा स्थाने स्थाने जिनमतं प्रभावयन्ती तदा तत्रागता सान्निध्यं विदधे, तन्महिम्ना विस्मिता विप्रास्तं श्रीजिनधर्म्मं च श्लाघंते स्म,ततोऽतिहृष्टमना मुग्धभट्टः स्वधाम्नि गत्वा पत्न्यै तत् न्यवेदयत् , तया प्रत्युतोपालब्धः-किमिदं मौग्ध्यं ?, जातु देवतासान्निध्याभावे पुत्रो दग्धोऽभविष्यत्तदा तवापि धर्मोऽयास्यत्,जने चापभ्राजनाप्यभविष्यत्, तेनैवं सर्वथा न क्रियते, क्रमात्तौ श्रीअजितजिनपार्श्वे प्रव्रज्य सिद्धौ, द्विजादयोऽपि प्रतिबुद्धाः, एवं धर्म्मे निश्शङ्कत्वं कार्यम् ॥ इत्युक्तः प्रथमो भेदः ॥ १ ॥

तथा काङ्क्षा-अन्यान्यदर्शनाभिलापस्तद्रहितत्वं निष्काङ्क्षत्वम्, तत्र श्रीधरदृष्टान्तोऽयम्-गजपुरे श्रीधरवणिग् भद्रप्रकृतिर्मुग्धः यत्र तत्राप्यास्थावान्, अन्येद्युर्मुनिपार्श्वं गतः, तैरूचे-यो जिनार्चां नव्यां विधाप्य भक्त्याऽर्चति तस्य सर्वार्थसिद्धिः स्यात्, यतः-" इहलोए दुरिआइं दूरं गच्छंति हुंति रिद्धीओ । परलोए सुररिद्धी सिद्धीवि जिणिंदपूआए ॥१॥" ततः स जिनार्चां निर्माप्य त्रिसन्ध्यमानर्च, सोऽन्यदा जात्यधूपमुत्क्षिपन् धूपेऽस्मिन्ननिष्ठिते इतः स्थानान्मया न चल-

नीयमित्यभिग्रहं जग्राह, तदैव दैवयोगाद् दुष्टाहिः कुतोऽपि निर्गतस्तं निर्भयं निश्चलं यावद्दशति तावत्तद्दाढ्यात्तुष्टा शासनसुरी दुष्टाहिं दूरमुत्सार्य तस्मै मणिं दत्त्वाऽवादीद्-एतत्प्रभावात्तवानर्गला कमला भवित्री, ततस्तस्य तद्रत्नानुभावाल्लक्ष्मीर्वर्षासु लतेव सर्वतोऽप्यवर्द्धिष्ट तत्स्पर्द्धादिव जिनपूजनाद्रतिरपि, अन्यदा तत्कुटुम्बे किञ्चित् किञ्चित् मान्द्योत्पत्तौ केनाप्युक्तं-गोत्रदेवीपूजया गोत्रे कुशलं स्यात्, ततः स तदर्चां विधाप्यार्चति स्म, कदाचित्तस्य विषमगडुविकारोत्पत्तौ केनचित्प्रोचे-अत्र सप्रत्ययो यक्षश्चेत्पूज्यते तदा नीरोगतादि फलमीप्सितं प्राप्यते, तच्छ्रुत्वा श्रीधरस्तस्मिन्नपि श्रद्धाधरो यक्षार्चामचीकरत् प्रत्यहमपूपुजच्च, एवं लोकोक्त्या विघ्नोपशान्तिलाभार्थं चण्डीगणेशयोरपि अर्चे नव्यकारिते नित्यमानर्च, अहो ! मुग्धस्य निर्विवेकता, अन्यदाऽथहितशासनदेव्या क्रुद्धया तद्रत्नेऽपहृते चौरैः सर्वस्वापहारादिना ग्रीष्मसरोऽम्भसीव सर्वथा द्रविणे क्षीणे भोजनस्यापि सन्देहेऽत्यन्तदुःखितः श्रीधरस्तेषामग्रे त्रिदिनीमुपोष्य तस्थौ, तैः किमप्यनुक्तौ तृतीयनिशि तेन गोत्रदेव्येव स्मृता रुष्टाऽऽचष्ट-रे दुष्ट ! निकृष्ट ! किं कष्टयसि मुधा ?, मत्पङ्क्तौ निवेशितान् यक्षादीनेव स्मर, यक्षेणोक्तम्-मदुपर्यानीतां चण्डीं स्मर, चण्डी-गणेशाभ्यामपि तथैवोक्तम्, एवं सर्वैर्मिथः सोपहासमुपेक्षितोऽत्यन्तं खिन्नः किंकृत्यमूढः शासनदेव्योक्तः-बहूनां ह्याराधने एवमेव स्यात्, तस्मादन्यान् देवान् मुक्त्वा सर्वदेवदैवतं श्रीसर्वज्ञमेवाराधय, यथा भवद्वयेऽपि सर्वाभीष्टसिद्धिः स्यात्, ततस्तेन यक्षादीन् सर्वान् सबहुमानं विसृज्य श्रीजिन एवाराद्धः, ततो दृढं निराकाङ्क्षाय तस्मै तद्रत्नं रत्नकोटीश्च शासनसुरी ददौ, सोऽर्हद्भक्त्यादिना तां श्रियं कृतार्थीकृत्य स्वः प्राप्तः, क्रमान् मुक्तिं प्राप्स्यतीति निष्काङ्क्षत्वे ज्ञातम् ॥ इत्युक्तो द्वितीयभेदः ॥ २ ॥

तथा विचिकित्सा-धर्मफलं प्रति सन्देहः तद्रहितत्वं निर्विचिकित्सत्वं, मन्त्रदेवताराधनादावपि हि फलस्य तिरस-

न्देहत्वे एव फलप्राप्तिः, नतु सन्देहे, चौरभवदत्तयोरिव, तत्सम्बन्धस्त्वयं-श्रावस्त्यां जिनदत्तः सुश्रावकः पञ्चपरमेष्ठिमन्त्रसाधनाप्रभावेण विद्याधरवन्नभोगामी शाश्वताष्टाह्निकामहं द्रष्टुं नन्दीश्वरद्वीपे गतः, सुरकृतजिनपूजार्पितत्तत्सुरभिद्रव्यदिव्यसौरभाद्वैतवासितवपुर्वस्त्रः पश्चात्प्राप्तो भवदत्ताह्वयवयस्येन कुतोऽयं ते निस्तुलः परिमल इति सनिर्बन्धं पृष्टो विद्यया नन्दीश्वरगमनाद्यवादीत्, ततः सुहृदा विद्यायाचने तेनोक्तं-यदि श्राद्धो भवसि तदैव ददामि, सोऽपि तथा प्रतिपेदे, तेन विद्यादानपूर्वं तत्साधनविधिरेवमुक्तः-सम्यक्त्वं स्वीकृत्य त्रिर्जिनपूजाभूस्वापब्रह्मचर्यैकाशनसंसारव्यापारवर्जनादिना पण्मासीं यावज्जिनाग्रतोऽखण्डाक्षतैर्विशेषपुष्पैश्चैकाग्र्यमौनपूर्वं लक्षजापेन सुगन्धिगुटिकालक्षहोमः कार्यः, एवं पूर्वसेवां विधाय कृष्णचतुर्दशीरात्रौ श्मशाने द्रुमशाखायां चतुष्पादं सिक्कं बद्ध्वाऽधस्तस्य कुण्डः खादिराङ्गारैः पूर्यते, ततः सिक्के उपविश्य विद्यामष्टोत्तरशतवारं जापं जापं एकैकः सिक्कस्य पादश्छेद्यः; क्रमेण चतुर्थे छिन्ने यथेच्छं व्योम्नि गम्यते, ततः स सर्वं तथैव चक्रे, परं पादच्छेदावसरे विद्यासिद्धिफले सन्दिहानोऽग्निपातमृतिभिया कम्प्रः सिक्कादुत्तरति, सुस्थीभूतस्तत्सिद्ध्यै पुनश्चटति, इतश्चैकश्चौरः पुरान्तः खात्रं दत्त्वा रत्नपेटामुत्पाट्य पृष्ठधावदारक्षकत्रस्तस्तद्वनान्तः प्रविष्टः, आरक्षैः प्रातश्चौरनिग्रहधिया सर्वतो वने वेष्टिते कुण्डानलोद्योतेन तमारोहावरोहं कुर्वन्तं दृष्ट्वा किमिदमिति पृष्टवान्, तेनापि यथास्थितोक्तौ चौरेणोक्तम्-तवेयं विद्या केन दत्ता ?, स जगौ-श्राद्धेन, ततः श्राद्धः सम्यग्वाद्येवेति दृढास्थश्चौरः प्राह-रत्नपेटां लाहि विद्यां च देहि, वणिगप्यर्थलुब्धो विद्यासिद्धिसंशयी हृष्टस्तथा चक्रे; 'भवद्वयभ्रंशकरीं धिग् धिग् लोभान्धतां यया । हिताहितार्थं जडधीः सहसैवं विचेष्टसे ॥ १ ॥' ततः सत्त्वधरश्चौरः सिक्कं आरुह्य विद्यामष्टोत्तरशतं सकृदेवं जपित्वा युगपदेव चतुरोऽपि सिक्कपादानच्छिदत्, तदैव च देवतावतार इव व्योम्न्युत्पत्य भवदत्तगिरा तीर्थनत्यै नन्दीश्वरद्वीपे ययौ, भवदत्तोऽपि प्रातस्तां

रत्नपेटां गृहीत्वा वनान्निर्यन्नारक्षैश्चौरधिया धृतः, क्ष्मापतेरग्रे नीतः, तेन च वध्य आदिष्टो, यावद्वधभूमौ निन्ये तावन्मद्गुरुः किं करोतीति विचिन्त्य चौररतत्रागतस्तं तथा दृष्ट्वा रुष्टः खे शिलोत्पाटनादिना तथा नृपादीनभापयद्यथा तैः पदोर्लगित्वा भवदत्तः क्षमितः सत्कृतश्च, एवं मन्त्रादावपि निस्सन्देहत्वे एव फलप्राप्तिमवेत्य धर्मफलं प्रति विशिष्य निस्सन्देहत्वं कार्यं, यथा कस्यचिदिभ्यपुत्रस्यालपश्रद्धस्योपदेशे दीयमाने 'देवचणेण रज्ज' मिति गुरुभिरुक्तौ स मुधैवैतत्तथा अदर्शनादिति दध्यौ, कुलाचारात्तु प्रत्यहं जिनार्चाकरणेऽपि तद्भवेऽन्यभवेऽपि फलं न लेभे, महान् कायक्लेशो भोजनान्तरायश्चेवि दुध्यर्ा-नाचिरं भवं भ्रान्तश्च । आसन्नगोपस्त्वेकस्तस्यां गुरूक्तौ दृढास्थः प्रत्यहं जिनार्चारतः पण्मास्या राज्यं परत्र च स्वर्गादि प्राप, अतो निर्विचिकित्सत्वं कार्यं ॥ निर्विचिकित्सत्वस्थाने निर्विज्जुगुप्सत्वमपि तृतीयं दर्शनाचारभेदं वदन्ति, 'निस्संकिअ' इत्यादिगाथादौ निविदुगुंछत्ति पाठान्तरोक्तेः, तथा च विदः–साधवस्तेपां मलमलिनाङ्गवेपाणां जुगुप्सा–कुत्सा तद्रहितत्वं निर्विज्जुगुप्सत्वं,तत्र प्राग्भवे कायोत्सर्गस्थमुनेर्नेत्रकण्टकापनयने मलार्द्रोऽयमित्यङ्गसङ्कोचनात्सङ्कुचिताङ्गपुण्याढ्यन्नृपतिर्ज्ञातम्, शङ्काकाङ्क्षाविचिकित्सानां विशेपव्याख्यादि स्वसमंकृतश्राद्धप्रतिक्रमणसूत्रवृत्तेर्ज्ञेयम् इत्युक्तस्तृतीयभेदः ॥ ३ ॥

तथा देवगुरुधर्मेष्वमूढदृष्टिरवं कार्यं, तत्र मिथ्यादृशां विद्यामन्त्रतपःपूजाप्रभावादिदर्शनेऽपि यस्य दृष्टिर्न मुह्यति सोऽमूढदृष्टिः, अम्मडपरिव्राजकपरीक्षितसुलसादिवदित्युक्तश्चतुर्थो भेदः ॥ ४ ॥

तथा उपबृंहणा-प्रशंसा, सा च लोकेऽप्यत्यन्तं बहुगुणा, प्रायस्तयैव सर्वेपां सर्वदा निर्वाहदर्शनात्, तथाहि-पितृपितृव्य-भ्रातृभ्रातृव्यपुत्रपौत्रमातृपुत्रीभगिनीभार्यास्नुपासुहृत्स्वजनपरिजनादयः श्रेष्ठिवणिक्पुत्रनृपनियोगिमहर्द्धिकादयोऽपि प्रशंसिता एव प्रायः प्रवर्द्धमानप्रोत्साहाः स्वस्वसाध्यविधौ सम्यक् प्रयतन्ते,नृपादयोऽपि गीतकवितादिभिस्तोपिता एव सहस्रलक्षाद्यपि प्रदद-

ते, कर्णभोजविक्रमादित्यादिवत्, सुरा अपि स्तुत्यादिभिः श्लाघिता एव च तुष्यन्ति, स्वेष्टकार्यं च कुर्वन्ति, एवं लोकोत्तरेऽपि देवगुरुशिष्यसाधर्मिकादौ भाव्यम्, अतः सा तपःस्वाध्यायविनयवैयावृत्त्यगुर्वादिष्टदुष्करविहारवादिजयादिधर्मकृत्योद्युक्तानां धर्मभाववृद्धये गुर्वादिभिर्यथार्हं कार्या, यदुक्तम्—"उववूहणमुववूहा पसंसणा सा गुणाण ते अ इमे। नाणाई नायवा निवाणपसाहगा परमा॥१॥ लहुअरगुणोऽवि सुगुणज्जणुज्जुओ जायए पसंसाए॥ भीरूवि होइ सूरो सुसामिसम्माणिओ समरे॥२॥ संतावि जया न गुणा सलाहणं पाउणंवि उचिअंपि। दुक्खज्जणेण हि तया करिज्ज को आयरं ताणं ?॥३॥ ता नाणाईविसए गुणलेसं जत्थ जित्तिअं पासे। उववूहिज्जा तत्थ उ तयंति सम्मंगमवगम्मं॥४॥ जो पुण पमायओ दप्पओ अ उववूहणे न वट्टिज्जा। नासिज्ज अप्पणं मुणिजणं च सो रुद्दसूरिव ॥ ५ ॥" रुद्रसूरिवृत्तान्तस्त्वेवम्—रुद्राचार्यगच्छे चत्वारः प्रसिद्धाः साधवः, तेष्वाद्यो बन्धुदत्तो वादलब्धिमान् द्वितीयः प्रभाकरश्चतुर्मास्यादितपस्वी तृतीयः सोमिलो नैमित्तिकस्तुर्यः श्यामार्यो गाढक्रियः, सूरिस्तु तेषां महिमानं न सहते नोपबृंहति च, अन्यदा पाटलिपुत्रपुरे संघाकारितशकुनाभावरिथतगुरुस्थाने बन्धुदत्तो गत्वा महावादिनं बौद्धं जित्वा सर्वैः श्लाघ्यमानः प्राप्तोऽपि रुद्राचार्येणोपबृंहितः, एवमन्येऽपि स्वस्वकार्योत्कर्षेऽपि तेनाऽनुपबृंहिताः खिन्नाः स्वस्वकृत्येष्वनादृता जाताः, एवं सर्वोऽपि गच्छः सीदति स्म, रुद्राचार्यः किल्बिषिकसुरीभूय निःस्वविप्रपुत्रो मूको मुखरोगी जातो, ज्ञानिपार्श्वे प्राग्भवं श्रुत्वा विरक्तः प्रव्रजितो घोरतपोभिः सुगतिभाग् जज्ञे। इत्युक्तः पञ्चमो भेदः ॥ ५ ॥

रुद्रसूरिवृत्तान्तः

स्थिरीकरणं

तथा स्थिरीकरणं—स्थिरत्वापादनं, तदपि तपःस्वाध्यायविनयवैयावृत्त्यगुर्वादिष्टदुष्करविहारादिकार्येषु मनोविपरिणामेन प्रमादादिना वा सीदतां यथार्हं भवापायदर्शनादिपरिणामहितोपदेशपूर्वं स्मारणावारणानोदनाप्रतिनोदनादिभिः कार्यं, प्रव्रज्याप्रथमदिन एव रात्रौ द्वारासन्नसंस्तारणगच्छदागच्छत्साधुपादघट्टनादिना विपरिणतमनस्कस्य मेघकुमारस्य श्रीवीरेणेव,

उक्तं च–" पम्हुट्ठे सारणा वुत्ता, अणायारस्स वारणा । चुक्काणं चोअणा भुज्जो, निट्ठुरं पडिचोअणा ॥१॥ थिरकरणा पुण थेरो पवत्तिवावारिएसु अत्थेसु । जो जत्थ सीअइ जई, संतबलो तं थिरं कुणइ ॥२॥ " इति षष्ठो भेदः ॥६॥

तथा साधर्मिकवात्सल्यं कार्यम्, तत्र समानधर्माणः साधर्मिकाः,ते च प्रवचनलिङ्गाभ्यां साधुसाध्व्यः, प्रवचनेन तु श्रावकश्राविका ।अपि, तेषु साधुसाध्वीनां विशिष्य चाचार्यग्लानप्राघूर्णकतपस्विबालवृद्धशैक्षादीनां, पुष्टालम्बनादीनपेक्ष्य श्राद्धादीनामपि सर्वशक्त्या वात्सल्यं–वत्सलत्वं द्रव्यभावाभ्यां तत्तदुपकारकरणादिना कार्यम्, श्राद्धेन च श्रावकश्राविकाणामपि यथार्हम् । यदाह–' संघयणकालबलविरिअपगरिसाभावओ सुगीआणं । सज्जो सज्जोगीणवि विलिज्जए संजमुज्जोगो ॥ १ ॥ किं पुण तक्कालपवन्नदिक्खसाहूण बालजोगीणं । होइज्ज न सो अभिनवधम्माणं सड्ढसड्ढीणं ॥ २ ॥ ता ताण पाणभोअणओसहवत्थाइदाणओ कुज्जा । वच्छल्लं सविसेसं, विगिट्ठतवबालयाईणं ॥ ३ ॥ वच्छल्लभावउच्चिअ, अथिरा धम्मे थिरत्तणमुविंति । पुव्वं चेव थिरा पुण थिरतरगा उज्जमंति दढं ॥ ४ ॥ लोएऽवि साहुवाओ नज्जंति विभिन्नदेसजाईवि । जिणसासणं पवन्ना एगकुडुम्बोव्ववन्नव ॥५॥ ताणं च ऊसवाइसु सरणं दिट्ठाण पुव्वमालवणं । तह वत्थपाणभोअणसक्कारो सव्वसत्तीए ॥ ६ ॥ परिभूआणं ताणं नरिंदमाईहिं बंदिअकयाणं । मोआवणं कुणंति अ धन्ना जीविअधणेणावि ॥७॥ सीदंताणं च सुवित्तिजुंजणं चोअणं पमाईणं । साहम्मिआण धन्ना कुणंति वच्छल्लवुद्धीए ॥ ८ ॥ सुहिसयणमाइआणं उवयरणं भवपवंधवुड्ढिकरं । जिणधम्मपवन्नाणं तं चिअ भवभंगमुवणेइ ॥ ९ ॥ आसंसाविरहाओ संसारिअभावविगमओ चेव । वच्छल्लमणुल्लं कित्तयंति साहम्मिअजणंमि ॥ १० ॥ इह साधोः साधर्म्मिकवात्सल्ये श्रीवज्रस्वामी भीष्मदुर्भिक्षेण मार्गेषु व्युच्छिन्नेषु पटविद्ययोत्तरापथात्पुरीनाम्नि पुर्यां सुभिक्षसुभगायां सङ्घस्य प्रापयिता ज्ञातं, श्राद्धस्य तु साधर्म्मिकवात्सल्ये सम्बन्धो,

साधर्मिक-
वात्सल्यं.
॥ ४९ ॥

यथा दशपुरेशवज्रकर्णनृपो देवगुरुसाधर्मिकान् विनाऽन्यं न नमामीतिकृतनियमो मुद्रिकानिवेशिताहेन्मूर्त्तिप्रणाममिषेण स्वस्वामिनं मालवेशं सिंहोदरनृपं सेवासमये नमति, पिशुनोक्त्या तत् ज्ञात्वा क्रुद्धः सिंहोदरस्तन्निग्रहं चिकीर्षुः, श्राद्धपुत्रेण गणिकाप्रेरणया राज्ञीमणिकुण्डलचौर्यार्थं प्रविष्टेन राज्यऽग्रे तथा वदन् ज्ञातः, साधर्मिकभक्त्या चौर्यं मुक्त्वा धावितो वज्रकर्णाय तदज्ञापयत्, सोऽप्यवन्त्या नंष्ट्वा स्वपुरे दुर्गान्तः प्रविष्टः, सिंहोदरेण तत्पुरं वेष्टितम् । तज्ज्ञात्वा साधर्मिकवत्सलत्वनवासार्थागतश्रीरामादिष्टलक्ष्मणेन तं जित्वा वज्रकर्णायार्द्धराज्यं दापितं चौराय मणिकुण्डलं च । इति सप्तमो भेदः ॥ ७ ॥

प्रावकाः १ तथा प्रभावना-जिनप्रवचनस्य प्रोद्भासना कार्या, तत्कारकाश्चाष्टौ प्रावचनिकादयः, यदुक्तम्-" पावयणी धम्मकही २ वाई ३ नेमित्तिओ ४ तवस्सी अ ५ ।विज्जा ६सिद्धो अ ७ कवी ८ अट्ठेव पभावगा भणिआ॥१॥" तत्र प्रावचनिकाः श्रीगौतमस्वामिश्रीसुधर्म्माद्याः १ धर्म्मकथका गणिकागृहस्थिता द्वादशवर्षीं यावत्प्रतिदिनं दश२प्रतिबोधकः श्रीनन्दिषेणः धर्मकथकाः, २
श्रीमदामनृपप्रतिबोधकश्रीबप्पभट्ट्यादयश्च २ वादिनो वृद्धवादिमल्लवादिवादिवेतालश्रीशान्त्याचार्यवादिदेवसूरिप्रमुखाः, तेषु वृद्धवादिस्वरूपं सिद्धसेनप्रबन्धे प्रागुक्तं, मल्लवादिप्रबन्धश्चायं-

भृगुकच्छे जिनानन्दसूरिर्वितण्डया बौद्धबुद्धानन्देन जितो ह्रिया वलभ्यां गतः, स्वभगिनीं दुर्लभदेवीमजितयशोयक्षमल्लाख्यपुत्रत्रयान्वितां प्राव्राजयत्, त्रयोऽपि प्राज्ञा जज्ञिरे मल्लश्च विशिष्य, ततः पञ्चमपूर्वोद्धृतसार्धलक्षद्वादशारनयचक्रग्रन्थपुस्तकं मल्लवादी
मत्परमादावन्ते च चैत्यगुरुसङ्घपूजादिमहोत्सवैः पठनार्हं कोशस्थं कस्यापि न दर्शनीयमिति दुर्लभदेवीसाध्व्याः सम्यग् भलापयित्वा गुरवोऽन्यत्र विजह्रुः, मल्लः कौतुकाद् रहस्तत्पुस्तकमुन्मुद्रय यावत् 'विधिनियमभङ्गवृत्तिव्यतिरिक्तत्वादनर्थकमवोचत् ।जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम्॥ १॥'इति प्रथमार्यामवाचयत्, तावच्छ्रुतदेव्या पुस्तके हृतेऽतिविषण्णो मात्रा सङ्घेन चोपाल-

न्धः,तदर्थं गिरौ केवलवल्लपारणस्तपस्तेपे,चतुर्मास्यां पारणे सङ्घेनाऽत्याग्रह्य विकृतिं ग्राहितः,ततः सङ्घाराद्धश्रुतदेव्या परीक्षार्थं 'निशि के मिष्टा?' इत्युक्तेनोक्तं–वल्लाः,षण्मास्यन्ते पुनः केनेति तयोक्ते गुडघृतेनेति तेन प्रत्युक्ते तद्धारणातुष्टया श्रुतदेवतया 'वरं वृणि'त्युक्तोमल्लः प्राह–नयचक्रपुस्तकं देहि,तयोक्तम्–अस्मिन् ग्रन्थे स्फुटा क्षुद्रसुरोपद्रवारेका,तेनाऽऽचार्यया नयचक्रं नवं कुरु, तेन श्लोका(?) युतमितं तत्तथाचक्रे,तच्च नयचक्रविवरणं प्राक्तनग्रन्थार्थोक्तया सर्वोपादेयं हस्तिस्कन्धाधिरूढं सोत्सवं सङ्घेन पुरे प्रवेशयमाहे, तस्मिंश्चादौ श्रीसङ्घेन मल्लमभ्यर्थ्यार्येयमलेखि–'जयति नयचक्रनिर्जितनिश्शेषविपक्षलक्षविक्रान्तः । श्रीमल्लवादिसूरिर्जिनवचननभस्तलविवस्वान् ॥ १ ॥" तेन च चतुर्विंशतिसहस्रमितं पद्मचरित्रमजितयशसा प्रमाणग्रन्थविश्रान्तविद्याधरव्याकरणन्यासौ यक्षेण चाष्टाङ्गनिमित्तसंहिता चक्रिरे, गुरुभिर्मल्लः सूरिपदे स्थापितो भृगुकच्छे बुद्धानन्देन सार्द्धं वादं चक्रे षण्मासीं, क्वचिद्ग्रन्थे तु षड्दिनीं, नयचक्राभिप्रायेण पूर्वपक्षे कृते तदवधारणाऽक्षमो बुद्धानन्दो वाग्युक्तं स्मृत्यै निशि खटीहस्तो लिखंस्तद्विस्मृत्याऽत्यन्तं खिन्नो हृत्स्फोटेन मृतः, प्रान्तः शासनसुर्या तत्स्वरूपं ज्ञापयित्वा मल्लाचार्ये पुष्पवृष्ट्यादि चक्रे, राज्ञा च वादीति विरुदं ददे, देशान्निर्वासिताः सौगताः पुनर्नागताः, बुद्धानन्दो मृत्वा दुष्टव्यन्तरीभूतः श्रीमल्लकृतग्रन्थद्वयमधिष्ठाय स्थितो वाचयितुं न दत्ते, एष सम्बन्धः प्रभावकचरित्रादौ ॥ मलधारिराजशेखरसूरिकृतप्रबन्धेषु त्वेवं–गूर्जरायां खेटमहास्थाने देवादित्यद्विजसुता सुभगाख्या बालविधवा सौरमन्त्राकृष्टार्केण बलाद्भुक्ता दिव्यशक्तेरापन्नसत्त्वा पित्रोपालब्धा सम्यक्स्वरूपकथने ह्रिया वलभ्यां प्रेषिता पुत्रपुत्रीयुग्मं सुषुवे, तौ दिव्यरूपौ अष्टवर्षौ लेखशालायां पठतः, अर्भकैर्निष्पितृकोऽयमिति उपहासे को मे पितेति प्रश्ने न वेद्मीति मात्रोक्ते पुत्रः खेदात् मर्त्तुमिच्छन् साक्षाद्भूय भानुनोचे–वत्साहं ते पिता, यस्त्वां पराभवति सः कर्करेण वध्य; ततः स डिम्भांस्तथा घ्नन् वलभीशेन तर्जितस्तमपि जित्वा स्वयं राजा जज्ञे शिलादित्याख्यो

जैनः शत्रुञ्जयोद्धारकारी, स स्वां स्वसारं भृगुपुरेशाय ददौ, तस्याः सुतो मल्लः, अन्यदा देशत्यागप्रतिज्ञापूर्वं वलभ्यां वादे दैवाद् बौद्धैर्जिते सर्वे जैनर्षयो विदेशेऽगुः शिलादित्यनृपो बौद्धीभूतः,शत्रुञ्जये श्रीऋषभस्तैर्बुद्धीकृत्यार्चितः,तत्स्वसा पत्युर्मृत्यौ विरक्ता सुतेन सहिता सुस्थिताचार्यपार्श्वे दीक्षां जग्राह, मल्लेनान्यदाऽम्बा पृष्टा–कथं नः सङ्घोऽल्पः ?, तया साध्वभावादि-स्वरूपे उक्ते क्रुद्धः स बौद्धान् जेतुं प्रतिज्ञां कृत्वा गिरौ च तीव्रं तपस्तेपे,के मिष्टा इत्यादि प्राग्युक्तपरीक्षया तुष्टया शासनदेव्या नयचक्रपुस्तकमर्पितं, तेन बाल्याद्भूमौ मुक्तं, स्रुग्देव्योक्तम्, सान्निध्यं ते विधाता न तु प्रत्यक्षाभविता, ततो वादे षण्मास्यन्ते बौद्धाचार्यमृत्यादि, वलभ्या भङ्गं ज्ञात्वा प्रागन्यत्र मल्लवादी सपरिकरो विजह्रे, इति श्रीमल्लवादिसम्बन्धः ॥

शांतिसूरि

अथ श्रीशांतिसूरिप्रबन्धः–थारापद्रगच्छे श्रीविजयसिंहसूरिपट्टे श्रीशान्तिसूरयोऽणहिल्लपुरे श्रीभीमभूपपर्षदि कवीन्द्र-चक्रित्वेन विश्रुताः, अन्यदा सिद्धसारस्वतपण्डितधनपालो मालवात्तिलकमञ्जरीकथां गुरुपार्श्वात् शोधयितुं गुरुषु देवतावसरं कुर्वत्स्वागात्, तेन लघुरेको नव्यः क्षुल्लो विषमवृत्तार्थं पृष्टः सद्य एव व्याचख्यौ, उपन्यासं च चक्रे, चमत्कृतो धनपाल-स्तेन साग्रहमाकारिता गुरवो मालवे विजह्रुः, पथि निशि भारत्योक्तं, त्वयोर्ध्वे हस्ते कृते वादिनः सर्वे विद्रविष्यन्तीति, श्रीभोजनृपो धारातः पञ्चक्रोश्यां सम्मुखमागतः, भोजस्य पञ्चशती वादीन्द्राः केनाप्यजेयाः,ततो वादिजये लक्षं लक्षं दास्ये इति नृपः प्रतिजज्ञे, सूरिश्चतुरशीतिवादिनो जिग्ये उर्द्धहस्तेन, चतुरशीतिर्लक्षा राज्ञा देया जाताः, पञ्चशतीवादिजये पञ्चकोटिव्ययो भावीति भीतो भोजः किं कृत्यमत्रेति पण्डितधनपालमाललाप, तेनोक्तम्–सम्मान्योऽयं कथाशोधनार्थमानीतः शान्तिसूरिः, राज्ञोक्तम्–नाम्ना शांतिः परं वादिनां वेतालस्ततो वादिवेतालेति बिरुदं ख्यातं,गूर्जरत्राया लक्षेण पञ्चदश सहस्राः स्युरिति द्वादश लक्षाणि षष्टिसहस्रांश्च नृपस्तस्मै ददौ, गुरुभिस्तेन द्रव्येण मालवान्तश्चैत्यान्यकार्यन्त, षष्टिसहस्र्या च थारापद्रचैत्ये देवकुलि-

काव्यकारि, तैश्च सा कथाऽशोधि । अन्यदा पत्तने श्रेष्ठिजिनदेवसुतः सर्पदष्टो मान्त्रिकैर्मुक्त उज्जीवनाशया गर्त्ते क्षिप्तो भुवः कर्ष- यित्वा अमृततत्त्वं स्मृत्वा हस्तस्पर्शेन तैरुज्जीवितः । ते च द्वात्रिंशच्छिष्यान् विषमतर्कान् भाणयन्ति, अन्यदा दुरधिगमे अर्थे बहूक्तेऽपि च्छात्रैरनधिगते तेषां निर्वेदे जाते मुनिचन्द्रसूरिर्नड्डुलपुरादागतः पक्षं यावदूर्द्ध्वं स्थितः, पुस्तकं विना श्रुततद्ग्र- न्थोऽनुपलक्षित एव गुर्वादेशग्रहणपूर्वं सर्वं सम्यग् अन्ववादीत्, ततस्तुष्टगुरुणा सन्मानितः षट्तर्कीं जग्राह, अन्यदा धनपाल- व्याख्यातश्रीशान्तिसूरिपरीक्षायै धर्म्मनामा वादी तदुपाश्रये पिहितद्वारे कुञ्चिकाच्छिद्रेण गुरुं संमृष्टकण्डूत्रौषधं दृष्ट्वा प्रप- च्छ-कस्त्वं ?, सूरिः प्राह-देवः , तेनोक्तम्-देवः कः ?, सूरिणोक्तम्-अहम्, अहं क इति प्रश्ने श्वा, श्वा क इति प्रश्ने त्वं, त्वं क इति प्रश्ने माग्वदुत्तरम्, इति चक्रकेण धर्मश्रमचक्रे, द्वारोद्घाटे तर्कवादयो ध्यानादिनाऽपि जिग्ये, अन्येद्युरव्यक्तभैरव- शब्दकृतं, द्रविडदेशवादिनं प्रतिभित्तिस्थोऽश्वस्तैः स्वहस्तं दत्त्वाऽवाघत यतोऽव्यक्तवादिनः प्रतिवादी पशुरेवार्हः , तेनापि स वादी जिग्ये, तैः श्रीउत्तराध्ययनबृहद्वृत्तिर्विदधे, तद्गतस्त्रीनिर्वाणस्थलेन श्रीमुनिचन्द्रसूरिशिष्यैर्वादिदेवसूरिमिश्रैः पत्तने दिक्पटः कुमुदचन्द्रो जिग्ये, थारापद्रे तेषां व्याख्यायां नागिनीदेवी नित्यमेति, उपवेशनार्थं तत्पट्टे ते वासं निक्षिपन्ति, एकदा वासनिक्षेपो विस्मृतः, रात्रौ तयोपालब्धा गुरवः-ऊर्द्धस्थितया ममाद्यांही सव्यथौ, एवं विस्मृतया षण्मासीशेषायुर्वः, ततस्ते द्वात्रिंशत्पात्रमध्ये त्रीन् सूरिपदे न्यस्य श्रीरैवते पञ्चविंशतिदिनान्यनशनेन विक्रमात्षण्णवत्यधिके वर्षसहस्रे वैमानिक- देवा बभूवुः इति श्रीशान्तिसूरिप्रबन्धः॥वादिश्रीदेवसूरिवृत्तं प्रायः प्रतीतं ॥ ३ ॥ नैमित्तिकाः श्रीभद्रबाहुप्रमुखाः, वराहमिहिरे- ण हि नृपसभे कुण्डलितभुवि द्वापञ्चाशत्पलप्रमाणमत्स्यपाते भाविनि भाषिते सार्द्धैकपञ्चाशत्पलमित एव मत्स्यः कुण्डलकर्कंठे पतिष्यतीति, तथा तेनैव स्वपुत्रस्य वर्षशतायुष्के निर्णीते बिडालीमुखमृत्युना सप्तदिन्येवायुरिति च तैरूचे, तच्च त-

येन जज्ञे॥४॥तपस्विनः पष्टिवर्षशतपष्ठकृद्विष्णुकुमारभिक्षानाप्तिनिमित्तषण्मासीतपःकृढण्ढणकुमारषष्टिवर्षसहस्रावाम्लकृत्सुन्दरी-वर्षकायोत्सर्गस्थबाहुबलिविषमाभिग्रहग्राहिक्षपकर्षिकृष्णर्षिषोडशवर्षाचामाम्लकारिश्रीजगच्चन्द्रसूरिप्रमुखाः ॥ ५ ॥ विद्यावन्तः श्रीआर्यखपुटाचार्यपरकायप्रवेशविद्याविज्जीवदेवसूरिकलिकालसर्वज्ञश्रीहेमचन्द्रसूरिप्रमुखाः, तत्रार्यखपुटाख्यानमिदं—

भृगुकच्छे बौद्धभक्तो बलमित्रो नाम नृपः,तत्र जैनावज्ञाकृतो बौद्धा मदोद्धता विद्यासिद्धश्रीआर्यखपुटाचार्यविनेयभागिनेयभुवनेन वादे जिग्यिरे,तन्महिमानमसमानमाकर्ण्य कर्णाम्रेडपीडित इव गुडशस्त्रपुरात्तत्रागतो वृद्धकराचार्योऽपि तेन जितो,लज्जितोऽनशनेन मृतः गुडशस्त्रे यक्षो जातः,सङ्घं व्याधिधनहरणादिनोपद्रुद्राव,ततः सङ्घाहूता आचार्या यक्षस्य कर्णयोरुपानहौ बद्ध्वा हृदि पादौ दत्त्वा पटावृताः शेरते स्म, तज्ज्ञात्वा तत्रागतो नृपो यत्र यत्र पटमपसारयति तत्र तत्र स्फिजावेव पश्यति, ततो रुष्टस्तद्देहे महारानदापयत्, ते त्वन्तःपुरपुरन्ध्रीशरीरेषु लगन्ति स्म, तासामाक्रन्दाद्वैते जाते भीतो नृपः सूरीन् क्षमयामास, यक्षोऽपि सूरिपादौ संवाहयंस्त्वद्भक्तोऽस्मीत्याह, गुरौ चैत्यान्निर्गते यक्षादयो बृहद्द्रूपत्कुण्डिके च सह चेलुः,नृपविज्ञप्त्या यक्षादयो विसृष्टाः स्वस्थानमगुः, कुण्डिके तु कुशात्यर्थं प्रतोल्यां स्थापिते, नृपादीनां श्राद्धीभवनेनैकच्छत्रं श्रीजिनमतसाम्राज्यमजनि। अन्यदा भृगुकच्छे एकः क्षुल्लको गुप्तन्यस्तपुस्तिकापत्रवाचनेनाकृष्टिविद्यां लब्ध्वा तया सितवस्त्राच्छादितानि पात्राणि श्रावकगृहेषु प्रेष्य यथेष्टमिष्टान्नभृतानि व्योम्न्यानीय भुङ्क्ते, गच्छसङ्घाभ्यां तर्जितो बौद्धानां मिलितः तया तन्महिमानमवर्धयत्, तद्वृत्तं सङ्घप्रहितसाधुमुखाद् ज्ञात्वा श्रीगुरवस्तत्र प्रच्छन्नमायाताः, खे शिलां विकुर्व्य भृतागच्छत्पात्राणि बभञ्जुः, ततो गुर्वागमं ज्ञात्वा क्षुल्लो नष्टः, सूरयः ससङ्घा बुद्धायतने प्राप्ताः, बुद्धो देवः शैलमयः संमुखमागत्य पदोर्लग्नः स्तुतिं चक्रे, एवं तत्र जिनमतं प्रभावितं ।

आर्यखपुट

इतश्च—पाटलीपुत्रे दाहडनृपो भूदेवभक्तः सर्वदर्शनिभ्यः प्रसह्य भूदेवप्रणाममकारयत्, जैनानां हठं, तथोक्तेस्तैरशुभस्य कालहरणमिति सप्तदिनी याचिता, तदा श्रीआर्यखपुटशिष्यः श्रीमहेन्द्रोपाध्याय आसन्नग्रामागत आकार्य तैर्विज्ञप्तो रक्तश्वेतकम्बे गृहीत्वा सर्वयतियुतो नृपसभे प्राप्तो नृपमुभयपार्श्वनिविष्टविप्रं प्रोचे—कस्मिन् पार्श्वे धिग्जातीन् नमामः ?, राज्ञोक्तम्—सर्वेऽपि वन्द्याः, ततस्तेन रक्तकम्बया भ्रमितया विप्रशिरांसि दशशिरःशिरांसीव भूमौ लुण्ठन्ति दिव्यशक्त्या दर्शयामासिरे, ततो हाहारवे विस्तृतेऽत्यन्तविषण्णः क्ष्मापस्तत्पदोर्लग्नः, तेनोक्तम्—यद्येते प्रव्रजन्ति तदैव जीवन्ति, नृपादिभिस्तथा प्रतिपन्ने श्वेतकम्बावाहनेन सर्वे सज्जीकृताः प्रव्राजिताश्च, राजादयोऽपि जैनधर्मं प्रपेदिरे, ततस्ते श्रीमहेन्द्रं स्वपदे न्यस्य दिवं ययुरित्यार्यखपुटप्रबन्धः ॥

अथ श्रीजीवदेवसूरिप्रबन्धः—वायटमहास्थाने श्रेष्ठिधर्मदेवस्याद्यः सुतो महीधरो देशान्तरभ्रमी दिकूपटैर्दीक्षितः सूरिपदे न्यस्तः परकायप्रवेशादिविद्याश्च दत्ताः, द्वितीयसुतो महीपालो भ्रातृवियोगादात्तदीक्षः श्वेताम्बराचार्यो जज्ञे, द्वयोर्मिलने मात्रा भ्रात्रा चाहाराशुद्ध्यायुक्त्या बोधितो दिगम्बराचार्यः श्वेताम्बरो जज्ञे, सूरित्वे जीवदेवेति नामा, स यतिपञ्चशतीपरिवारो व्याख्याक्षणागतस्वजिह्वापर्यंकबन्धिवाचकजिह्वास्तम्भकसाध्वीशिरश्चूर्णक्षेपवशाकारकदुष्टयोगिनमासनस्तम्भनादिना न्यग्रहीत्, तत्रैव मल्लः श्रेष्ठी सूर्यपर्वणि कृतधर्मार्थलक्षद्रव्यसङ्कल्पोऽग्निकुण्डे यज्ञं कारयन् उपरि वृक्षात् धूमाकुलं महासर्पं विप्रैः पर्यस्याग्निकुण्डे क्षिप्तं दृष्ट्वा हाहाकारं कुर्वंस्तैरुक्तः—अत्र मृताः स्वर्यान्ति, तथापि तेन प्रायश्चित्ते प्रार्थिते सौवर्णं द्विगुणमहिं कृत्वा देहीति विप्रैरुक्तं, तेन तथाकृते अभिमन्त्र्य विभजनार्थं तस्य छेदे भृशं खिन्नो यागं विससर्ज, धर्मार्थी साधुद्वयं भिक्षाग्रहणे यतमानं दृष्ट्वा साधूक्त्या श्रीजीवदेवसूरिपार्श्वं गतः, तैर्बोधितः श्राद्धो जज्ञे, सङ्कलिपतद्रव्यलक्षार्द्धं प्राग् व्ययितं विप्रादौ अर्द्धं यूयं

गृह्णीतेति तेनोक्ते गुरुभिस्तद्द्रव्येण प्रासादाद्यकारि, तद्द्वेषाद् द्विजैर्म्रियमाणा गौरर्हच्चैत्यगर्भगृहे नीता मृता च,गुरुभिरन्तर्मठमासनस्थैः स्वाङ्गरक्षार्थं मुनीन् मुक्त्वा कुम्भकेन ध्यानं धृत्वा विद्यया तद्देहे प्रविश्य सा ब्रह्मचैत्यगर्भगृहे प्रवेशिता, द्विजैः पदोर्लगने मद्गच्छे नव्याचार्यो हैममुपवीतं दत्त्वा ब्रह्मचैत्ये ब्राह्मणैरभिषेच्यः सोत्सवमित्याद्युक्तिस्वीकृतौ ततोऽपि निष्कासिता, आयुःप्रान्ते एकखण्डमस्मत्कपालं लात्वा स योगी जिनमतोपद्रवान् कर्त्तेति तन्निर्जीवं भङ्क्तव्यमेवेत्याप्ताय उक्त्वा ते स्वर्ययुः, तेन तथा चक्रे, स योगी कपटशुचा तत्रागतः कपालं भग्नं दृष्ट्वा करौ घृष्ट्वा प्राह-विक्रमार्कस्यास्य मम चैकखण्डं कपालं विद्यासिद्धिहेतुस्तत्तु न प्राप्तं, स व्योम्ना मलयाद्यानीतश्रीखण्डागुरुभिर्गुरुसंस्कारं दधे, इति श्रीजीवदेवसूरिप्रबन्धः ॥ श्रीहेमसूरेः कण्टेश्वरीवशीकरणा विद्यावत्त्वं प्रसिद्धम् ॥ ६ ॥

सिद्धाः-प्राप्तप्रतिष्ठाः,ते च विद्यामन्त्रबुद्धियोगागमादिभेदैरनेकधा;तत्र स्त्रीदेवताधिष्ठिता ससाधना वा विद्या,पुरुषदेवताऽधिष्ठितोऽसाधनो वा मन्त्रः,अत्र विद्यासिद्धा मन्त्रसिद्धाश्चाल्पभेदत्वेन विद्यावत्सु सङ्गृहीताः,यदुक्तं दर्शनसप्ततिकायाम्-"सिद्धबहुविज्जमंतो विज्जावंतो अ उचिअन्नू"इति,तत्र मन्त्रसिद्धः स्तम्भाकर्षकादिः,यथा क्वापि पुरे सुरूपा साध्वी राज्ञा धृता,सङ्घेन बहूक्तेऽपि न मुक्ता, ततो मन्त्रसिद्धेन नृपाङ्गणे स्तम्भा अभिमन्त्र्य खे नाताः खटत्खटन्ति, प्रासादस्तम्भा अपि कम्पिताः, ततो भीतेन राज्ञा सा मुक्ता ॥ बुद्धिसिद्धा-अभयकुमाराद्याः, योगः-सुवर्णसिद्ध्यादिजनकचूर्णनिधिदर्शनाद्दृश्यीकरणाद्यञ्जनरूपः पादलेपादिना व्योमोत्पातनसौभाग्यदौर्भाग्यादिसाधकश्च, तत्सिद्धाः गर्दभिल्लोच्छेदी इष्टकापाकसुवर्ण्णमयीकारकः श्रीकालकाचार्यः पादलेपेन प्रत्यहं श्रीशत्रुञ्जयरैवताष्टापदसम्मेतादितीर्थयात्राकृन्नागार्जुनयोगिप्रतिबोधकः 'गाहाजुअलेण जिण' मितिस्तवने गाथाद्वयान्तः स्वर्णसिद्धिगोप्ता श्रीपादलिप्तसूरिः श्रीवज्रस्वामिमातुल आर्यसमितश्च, स हि द्वयोर्नद्योरन्तरे ब्रह्मद्वीपस्थ-

प्रभावक

सिद्ध ७

तापसान् पादलेपान्नीरोपर्यागमनविस्मापितजनान् गुरुभक्त्या श्राद्धैर्निमन्त्र्य प्रसह्यांह्रिधावनान् पश्चाद्गमने नद्यां ब्रुडतो ह्रीणान् योगप्रक्षेपान्नदीतटद्वयमीलनदर्शनेन प्रत्यबूबुधत् ॥ ७ ॥

कवयो द्विधा, तत्र प्रथमे जिनशासनरहस्याभिज्ञतया सद्भूतार्थशास्त्रसन्दर्भकाः, यदूचे—"भूअत्थसत्थगंथी जिणसासणजाणओ सुकवी" इति, ते च तत्त्वार्थप्रशमरत्यादिकृत् श्रीउमास्वाति १समरादित्यचरित्रानेकान्तजयपताकाऽनेकान्तमतप्रवेशषोडशकाष्टकविंशिकापंचाशकपंचवस्तुकादिसार्द्धसहस्रप्रकरणप्रणेतृश्रीहरिभद्रसूरि २भवभावनापुष्पमालातदुभयवृत्तिविशेषावश्यकाऽनुयोगद्वारवृत्तिश्रीआवश्यकवृत्तिटिप्पनकाद्यनेकग्रन्थग्रन्थकमलधारिश्रीहेमचन्द्रसूरि ३भूरिसिद्धान्तवृत्तिकारिश्रीमलयगिरि ४प्रमाणमीमांसात्रिषष्टिशलाकापुरुषचरित्रव्याकरणादित्रिकोटीग्रन्थप्रथकश्रीकुमारपालप्रतिबोधकश्रीहेमाचार्यप्रमुखाः ज्ञेया । द्वितीयास्तु सातिशयकवित्वकलाकुशलाः श्रीसिद्धसेनभक्तामरस्तवनाकारिश्रीमानतुङ्गसूरिश्रीबप्पभट्टिस्थाने२कवित्वकलाविस्मापितत्याजितमृगयायज्ञादिकुकर्मश्रीभोजभूपालधनपालपण्डितप्रभृतयः ८ ॥ प्रभावक कवि ८

श्रीनिशीथादौ तु प्रभावका एवमुक्ताः —" अइसेसिड्ढि[1] धम्मकहि[2] वाइ[3] आयरिअ[4] खवग[5] नेमित्ती[6] । विज्जा[7] रायागणसम्मओ अ[8] तित्थं पभाविंति " ॥ १ ॥ अतिशेषिताः—अपरेभ्यः परमोत्कर्षं नीता ऋद्धयो—जङ्घाचारणविद्याचारणाशीविषजल्लौषध्यवधिमनःपर्यायादिलब्धयो यस्य सोऽतिशेषितर्द्धिः, धर्मकथी—व्याख्यानलब्धिमान् वादी—परवादिविजेता आचार्यः—षण्णवत्यधिकद्वादशशतगुणालङ्कृतः क्षपको—विकृष्टतपस्वी नैमित्तिकः—त्रिकालज्ञानवेत्ता विद्यावान्—सिद्धविद्यामन्त्रः राजगणसंमतो—नरेन्द्रप्रभृतिलोकाभीष्टः, एते तीर्थं—जिनशासनं प्रभावयन्ति उद्योतयन्तीत्यर्थः ॥ कालादिवैषम्यात् पूर्वोक्तसिद्धीनामभावे तु जिनमतोत्सर्पणाकारि सर्वमप्यनुष्ठानं प्रभावनात्वेन निशीथ-प्रभावक

विज्ञेयं, यदुक्तं–' इअ संपत्तिअभावे जत्तापूआइ जणमणोरमणं । जिणजइविसयं सयलं पभावणा सुद्धभावेणं ॥ १ ॥ " व्याख्या–इति–पूर्वोक्तानां लब्धीनां विरहे, नहि सर्वत्रैता लब्धयः सम्भवन्ति, विशिष्य निरतिशयेऽस्मिन् काले, किं कार्यमित्याह –यात्रा–तीर्थेषु सोत्सवं सङ्घेन सह गमनं, युगप्रधानादेर्वा वन्दनार्थं महर्ध्या संमुखं यानं, पूजा–कुसुमाद्यर्चनं गुरूणां वा वन्दनकादिदानम् । आदिशब्दादभयदानसत्रागारपटहोद्घोषणादि, एवंरूपं देवगुरुविषयं सर्वमप्यनुष्ठानं जनमनःप्रीत्युत्पादकं त्रिकरणशुद्ध्या कृतं प्रभावना भवतीति दर्शनसप्ततिकावृत्तौ ॥ श्रावकास्तु प्रभावकाः श्रीतीर्थयात्राजिनप्रासादप्रतिमाप्रतिष्ठासत्रागाराऽमारिपटहोद्घोषणाश्रीगुरुप्रवेशोत्सवकारणसोत्सवश्रीव्रतसम्यक्त्वादिप्रतिपत्तिसाधर्म्मिकवात्सल्यादिविविधपुण्यप्रकारैः श्रीजिनमतोन्नतिकारकाः प्रभावकत्वेन ज्ञेयाः । अत्र श्रीनेमिजिनाद्वर्षाणामष्टसहस्र्यां व्यतिक्रान्तायां श्रीशत्रुंजयरैवतयात्रार्थं साऽभिग्रहं प्रस्थितोऽन्तरा देवकृतविविधोपसर्गैरक्षुब्धः श्रीरैवते स्नात्रजलैः प्राक्तनलेप्यमयबिम्बगलने खिन्नः षष्टिक्षपण्याऽराद्धांबादेशप्राप्तश्रीब्रह्मेन्द्रकृतवज्रमयश्रीनेमिप्रतिमास्थापकः श्रीरत्नश्रावकः षट्त्रिंशत्सहस्रनव्यश्रीजिनप्रासादनवनवतिसहस्रश्रीजीर्णचैत्योद्धारसपादकोटिश्रीजिनबिम्बकारिश्रीसम्प्रतिभूपतिर्देशाष्टादशकामारिप्रवर्तकचतुर्दशशतमितनव्यार्हच्चैत्यषोडशसहस्रजीर्णोद्धारकारकद्वासप्ततिलक्षद्रव्यसाधर्म्मिककरमोचकश्रीकुमारपालभूपालः चतुरुत्तरत्रयोदशशतनव्यार्हच्चैत्यत्रयोविंशतिशतजीर्णोद्धारसप्तशतसत्रागारप्रवर्त्तनाद्यगण्यपुण्यकीर्तनकारिश्रीवस्तुपालतेजपालौ श्रीशत्रुंजयतीर्थेषट्पञ्चाशद्घटीस्वर्णेन्द्रमालापरिधायिद्वासप्ततिसहस्रटङ्कव्ययश्रीधर्मघोषसूरिप्रवेशोत्सवविधायकः साधुपेथडः द्वादशोत्तरशतदानशालाप्रवर्तकः साधुजगडूश्चेत्यादयो दृष्टान्ताः स्पष्टा एव ॥ इति तपा॰श्रीसोमसुन्दरसूरिश्रीमुनिसुन्दरसूरिपट्टप्रतिष्ठितश्रीरत्नशेखरसूरिविरचिते श्रीआचारप्रदीपे दर्शनाचारप्रकाशको द्वितीयः प्रकाशः ॥ २ ॥

अथ प्रस्तावायातश्चारित्राचारो विव्रियते–तत्र चारित्रं–साधोः सर्वविरतिरूपं श्राद्धस्य तु देशविरतिरूपं, यदाहुः–“सर्वात्मना यतीन्द्राणामेतच्चारित्रमीरितम् । यतिधर्मानुरक्तानां, देशतः स्यादगारिणाम् ” ॥ १ ॥ । चारित्रं च भवद्वयेऽपि सर्वोत्कृष्टफलं, यतः–“ नो दुष्कर्मप्रयासो न कुयुवतिसुतस्वामिदुर्वाक्यदुःखं, राजादौ न प्रणामोऽशनवसनधनस्थानचिन्ता न चैव । ज्ञानाप्तिर्लोकपूजा प्रशमसुखरतिः प्रेत्य मोक्षाद्यवाप्तिः, श्रामण्येऽमी गुणाः स्युस्तदिह सुमतयस्तत्र यत्नं कुरुध्वम् ’ ॥ १ ॥ चारित्रं हि निर्वाणस्यानन्यसाधारणमवन्ध्यं बीजं, यदागमः–“ जम्हा दंसणनाणा संपुन्नफलं न दिंति पत्तेअं । चारित्तजुआ दिंति उ ।वसिस्सए तेण चारित्तं ॥१ ॥ ” तदाराधननिष्णातानां च महर्षीणामनन्तभवार्जिततीव्रतीव्रतरकृत्स्नकर्मक्षयादिफलं कियदुच्यते ?, यतस्तेषां बहुमानमात्रमप्यमात्रफलं, सिद्धवैद्यजीवत्रानरस्येव, तत्कथानकं पुनरित्थं–अत्थित्थ पुमत्थपरमत्थसाहणसमत्थसमत्थजणपंतिमई कंतिमई नाम नयरी, तत्थ पसत्थजणाणवि बहुनिउणत्तणेण माणणिज्जो निरवज्जविज्जविज्जासमिद्धिपसिद्धो सिद्धो नाम महाविज्जो । इत्तो गाहा–तंमि पुणोऽणंतभवंतरचिरतररचिअपरिचयवसेण । जायमहामोहो इव निवसइ निच्च महालोहो ॥ १ ॥ घोरंधयारनियरो निरंतरो जह य नरयवासेसु । दुक्खं च नारएसु अ ही लोहो तह य जीवाणं ॥ २ ॥ तस्स य लोहाउ हयं निउणत्तं दुण्णयाउ वित्तं वा, धूमा चित्तं तिमिरा नित्तं कवडाउ मित्तं व ॥ ३ ॥ तओ सो लोभाभिभूओ भूआभिभूओ इव न गणेइ सयणजणं, न चिंतेइ निअमित्तपरिअणं, नाविक्खेइ दीण–दरिद्द–दुक्खिअलोगं, न वितक्केइ पुण्णपावविवागं, न य संभरेइ नीइसत्थाणि, न य गिण्हेइ हत्थेऽवि धम्मसत्थाणि, न य आणेइ सुविणेऽवि संतोसवित्तिं, न य गणेइ जणाववायकुकित्तिं, किं बहुणा, रिंगिणीओसहविसेसवल्लीविसेसगलोईहरडईगिरिकण्णीइंदवारुणीगोरखुरपुंआडधत्तूरधुंसगतगरएरंडअक्कतरुथोपिप्पलत्रिल्लउंबरकिंसुगमूलगमहूगकविट्ठट्टकविकंच्छूरा-

अजमोआइठाणेसु सुवन्नकंटिआसुवन्नपक्खिगअमयवल्लीअमयाअभयाअपराजिआविसालाहत्थिचमकारचक्कमद्दगकणगगय णमंडवनरिंदपवणारिसहस्सकिरणमहातरुसिरिरुक्खसिरिफलहेमदुद्धगवभपायवहत्थिदंतगमहदुमदहिफलअत्तगुत्ताआसुरीदीवगप मुहबहुविहओसहअप्पसिद्धअभिहाणाडंबरेण अणेगकित्तिमरसरसायणकरणेणं य वंचेइ सव्वंपि पुरजणं, संचेइ कूडकारज्जिअं अइपभूअं धणं,हरिसं वहेइ बहुधणसंपत्तीए, न किंपि बोहेइ परभवविपत्तीए, एवं सो सप्पुव्व पगइदिट्ठी महामिच्छदिट्ठी संचिणंतो भूरिपावकम्मजालं अइक्कमेइ बहुकालं। इत्तो सिलोगा-अन्नया दिव्वजोएणं, दिट्ठो तेण वणंतरे। मुणी मुणिअतत्तत्थो, मुत्तो उवसमो इव ॥ १ ॥ सो अ लोअपवाहेण, गंतूणं तेण वंदिओ। साहुणा धम्मलाहेण, एसोऽवि अभिणंदिओ ॥ २ ॥ करुणासिंधुणा तेण, तो निक्कारणबंधुणा। नाउं विज्जत्ति तज्जुग्गा, पारद्धा धम्मदेसणा ॥ ३ ॥ सा पुण एवं-भो भद्द! इहमह भवसमुद्दमज्झे दुट्ठवाहिणा इव असव्वज्झेण पावकम्मुणा परिब्भमंतो खणमित्तंपि कत्थवि अविरसमंतो अणेगजम्ममरणउव्वट्टणापवट्टणसहस्साइं लहंतो विविहदुक्खमहदुहसयसहस्साइं सहंतो कहमवि दिव्वपरिणइवसेण समयपसिद्धचुल्लगाइदसदिट्ठंतदुल्लहं देवाणवि दुल्लहं माणुसभवं पवरदेवं व जीवो पावेइ.तत्थवि आरिअखित्ताइआणि महानिहाणाणि व दुल्लहाणि। जओ-" माणुस्स खित्त जाई कुलरूवारुग्ग आउअं बुद्धी। सवणुग्गह सद्धा संजमो अ लोगंमि दुलहाइं ॥ १ ॥ " एवं अइदुल्लहं लहिऊण समग्गधम्मसामग्गिं महादरिद्दिव्वखबुभुक्खिअव्व कहमवि लद्धे सुसिणिद्धे भोअणेव्व अभिरम्मे धम्मकम्मे को नाम मूढप्पा पमाएइ ?, पुव्विं ताव विज्जवणं जीवस्स परं अणज्जत्तणं, जओ-विज्जो सयावि अणज्जकज्जसज्जो महाअहिव्व दुट्ठहिअओ तेल्लुक्कस्सवि पडिकूलं महादुक्खमूलं लोआणं महंतवाहिपीडिअत्तणं रत्तिदिणं अहिलसेइ, उल्लसेइ अ तव्वत्तासवणेऽवि,विसेसओ पुण अत्थवइणं राइणं च। भणिअं च-"दुर्भिक्षोदयमन्नसंग्रहपरः पत्युर्वधं बन्धकी,ध्यायत्यर्थ-

परिभोगंमि चउक्कं, विसोहिज्ज जयं जई ॥ २ ॥” एतयोरर्थलेशश्चायम्–एषणा त्रिधा–गवेषणायां १ ग्रहणे २ परिभोगे ३ च भवति, आहारोपधिशय्यासु विषये एतास्तिस्र एषणा विशोधयेत्, शय्या–वसतिः, तत्र प्रथमायां गवेषणायां उद्गमोत्पादना-दोषान्–आधाकर्मधात्रीदोषादिकान् शोधयेद्–अपनयेत्, द्वितीयायां–ग्रहणैषणायामेषणादोषान् शंकितादीन् परिभोगैषणायां संयोजनादोषचतुष्कम्,अङ्गारधूमयोर्मोहनीयान्तर्गतत्वेनैकत्वविवक्षणात् शोधयेद्यतमानो यतिः। नवकोटिविशुद्धिश्चैवम्–पिंडे-सणा उ सव्वा संखेवेणोअरइ नवसु कोडीसु। न हणइ न पयइ न किणइ कारावणअणुमईहिं नव॥१॥नव चेवऽट्ठारसगं सत्तावीसा तहेव चउपण्णा। नउई दो चेव सया उ सत्तरा हुंति कोडीणं ॥ २ ॥ रागाई मिच्छाई रागाई समणधम्म नाणाई। नव नव सत्तावीसा नव नउईए य गुणकारा ॥ ३ ॥ सा नवहा दुह कीरइ उग्गमकोडी विसोहिकोडी अ। छसु पढमा ओअरई, कीअ-तिगंमी विसोही अ ॥४॥ एताः श्रीदशवैकालिकनिर्युक्तिगाथाः। नवसु कोटीष्वाद्याः षडुद्गमकोटयः अविशोधिकोटय इत्यर्थः, अन्त्यास्तिस्रो विशोधिकोटयः।एता नवापि कोटीः कोऽपि रागेण सेवते कोऽपि द्वेषेणेति द्वाभ्यां गुणिता अष्टादश स्युः।अथवा ता एव नव कोऽपि मिथ्यादृक्कुशास्त्रवासनातः सेवते कोऽपि सम्यग्दृष्टिर्विरतोऽप्यनाभोगादिना अज्ञानतः कोऽपि च सम्यग्दृष्टिरप्यविरतत्वेनेति मिथ्यात्वाज्ञानाविरतित्रिकेण नव गुणिताः सप्तविंशतिः२७,अत्र रागद्वेषौ पृथग् न विवक्ष्येते, यदा तु विवक्ष्येते तदा द्वाभ्यां सप्तविंशतिर्गुण्यते जाताः षट्पञ्चाशत् ५६, तथा ता एव नव जातु पुष्टालम्बनेन दशविधक्षान्त्यादि-धर्मपालनार्थं सेव्यन्ते, यथा दुर्भिक्षादौ फलादिना देहं धृत्वा क्षान्त्यादि पालयिष्यामीति विचिन्त्य हन्ति घातयति वेत्यादि, ततो नव दशभिर्गुणिता जाता नवतिः ९० इयं च सामान्यतश्चारित्रनिमित्ता, एवं काचित्सामान्यतश्चारित्रनिमित्तत्वेऽपि विशे-षतो ज्ञाननिमित्ता दर्शननिमित्ता च भवति, यथा कान्तारादौ फलादिना देहं धृत्वा क्षान्त्यादि पालयिष्यामि नानाशास्त्राणि

त्याधीष्ये दर्शनं वा निर्मलीकरिष्ये दर्शनस्थिरीकारिशास्त्रैरिति विचिन्त्य इत्यादि,एवं ज्ञानस्य प्राधान्यविवक्षातो ज्ञाननिमित्तत्वं, दर्शनस्य प्राधान्यविवक्षातो दर्शननिमित्तत्वं च भाव्यमिति। नवतिह्विर्गुणिता जाते द्वे शते सप्तत्यधिके कोटीनामिति पिण्डनिर्युक्तिवृत्तौ । नन्वाधाकर्मिकद्रुमस्य छायाऽऽधाकर्मिकी स्यात् नवेत्यत्राह-छायंपि विवज्जिति केई फलहेउगाइवुत्तस्स । तं तु न जुज्जइ जम्हा फलंपि कप्पइ विइअभंगे ॥ १ ॥ इह फलहेतुकादेः-फलहेतोः पुष्पहेतोरन्यस्माद्वा हेतोः साध्वर्थमुप्तस्य वृक्षस्य केचिदगीतार्थाःछायामप्याधाकर्मिकवृक्षसम्बन्धिनीतिकृत्वा विवर्जयन्ति, तच न युक्तं, यस्मात्फलमपि यदर्थं स वृक्ष आरोपितस्तदाधाकर्मिकवृक्षसम्बन्धि द्वितीये भङ्गे तस्य कृतमन्यार्थं निष्ठितमित्येवंरूपे कल्पते, अयं भावः-साध्वर्थमारोपितेऽपि कदल्यादौ वृक्षे यदा फलं निष्पद्यमानं साधुसत्ताया अपनीय आत्मसत्तासंबंधि करोति त्रोटयति,च तदा तदपि कल्पते,किं पुनश्छाया?,सा हि सर्वथा न साधुसत्तासम्बन्धिनी विवक्षिता,नहि साधुच्छायानिमित्तं स वृक्ष आरोपितः,न च सा छाया केवलं वृक्षमात्रनिमित्ता,किन्तु सूर्यनिमित्तापि,छाया हि नाम पार्श्वतः सर्वत्रातपपरिवेष्टितप्रतिनियतदेशवर्त्ती श्यामपुद्गलात्मक आतपाभावः,इत्थम्भूता च सा छाया सूर्यस्यैवान्वयव्यतिरेकावनुविधत्ते न द्रुमस्य,द्रुमस्तु केवलं तस्या निमित्तं, न चैतावता सा दुष्यति, छायापुद्गलानां द्रुमपुद्गलेभ्यो भिन्नत्वात्,ततो द्रुम एवाधार्मिकः, तत्संसृष्टाश्चाधः कतिपयप्रदेशाः पूतिरिति ज्ञेयं । किञ्च-छायाया आधाकर्मिकत्वे प्रातः सन्ध्यायां चातिद्राघीयस्या छायया संस्पृष्टं सर्वमपि ग्रामसम्बन्धि वसत्यादिकं पूतिः स्यात्, नचैतदागमेऽस्ति, तस्माधाकर्मिकी छायेति पिण्डनिर्युक्तितद्वृत्त्योः । अत्रौघिकोपधिजिनकल्पिकादीनामेवमुक्तः-पत्तं १ पत्ताबंधो २ पायट्ठवणं च ३ पायकेसरिआ ४ । पडलाइं ५ रयत्ताणं च ६ गुच्छओ ७ पायनिज्जोगो ॥ १ ॥ तिन्नेव य पच्छागा १० रयहरणं चेव ११ होइ मुहपुत्ती १२ । एसो दुवालसविहो उवही जिणकप्पिआणं तु ॥ २ ॥ एए चेव दुवालस मत्तय १३ अइरेग चोलपट्टो

१४ अ। एसो उ चउदसविहो उवही पुण थेरकप्पंमि ॥३॥ जिनान् प्रत्येकबुद्धांश्चाश्रित्यैवमुपधिः श्रीपञ्चकल्पे प्रतिपादितः–एगो तित्थरायाणं निक्खममाणाण होइ उवही उ तेण परं निरुवहिआ जावज्जीवाइ तित्थयरा १॥'एगोत्ति'देवेन्द्रदत्तदेवदूष्यरूपः, सत्त य पडिग्गहंमी रयहरणं चेव होइ मुहपुत्ती। एसो उ नवविगप्पो उवही पत्तेअबुद्धाणं॥२॥सत्तयपडिग्गहंमित्तिपडगरुं, पत्तं पत्ताबंधो २ इत्यादयः सप्त, प्रत्येकबुद्धाश्च देवतादत्तलिङ्गा भवन्ति लिङ्गरहिता वा भवन्ति,अत्र च जिनकल्पिकानां द्वादशविध उत्कृष्टो जघन्यस्तु द्विविधः,यदुक्तं श्रीविशेषावश्यके–"जिणकप्पिआ य दुविहा पाणिप्पाया पडिग्गहधरा य। पाउरणमपाउरणा इक्किक्का ते भवे दुविहा ॥ १ ॥ दुग तिग चउक्क पणगं नव दस इक्कारसेव बारसगं। एए अट्ठ विगप्पा जिणकप्पे हुंति उवहिस्स ॥२॥ इह केषाञ्चिज्जिनकल्पिकानां रजोहरणं मुखवस्त्रिका चेति द्विविध उपधिः१अन्येषां कल्पेन सहत्रिधा२ कल्पद्वयेन सह चतुर्द्धा ३ कल्पत्रयेण पञ्चविधः ४ केषाञ्चिन्मुखवस्त्रिका रजोहरणं,तथा-पत्तं पत्ताबंधो २ पायट्ठवणं च ३ पायकेसरिआ ४।पडलाइ ५ रयत्ताणं ६ च गुच्छओ ७ पायनिज्जोगो॥ १ ॥ इति सप्तधा पात्रनिर्योग इति नवविधः५ स एव कल्पेन सह दशविधः६ कल्पद्वयेन सहैकादशविधः ७ कल्पत्रयेण सह द्वादशविध इति ॥ संयतीनां चौधिकः उपधिः पञ्चविंशतिविधः, यदभिदधे–" जिणा बारसरूवा य, थेरा चउदसरूविणो। अज्जाणं पन्नवीसं तु, अओ उड्ढं उवग्गहो ॥१॥" औघिक उपधिर्यो नित्यमेव गृह्यते, कारणे त्वापन्ने यः संयमार्थं गृह्यते स औपग्रहिकः,स चानेकविधो यथा-अक्षाः संस्तारकोत्तरपट्टौ दण्डक उच्चारप्रस्रवणखेलमल्लकानि रजोहरणस्य सौत्रिकी और्णिकी चेति द्विधा निषद्या प्रमार्जनी डगलकक्षारतृणपीठफलकादिः, योगपट्टसूचीनखरदनिकाचिलिमिल्यादिश्च गुरुयोग्य एव, पञ्चविधपुस्तकाद्यप्यौपग्रहिकं, परं मुख्यवृत्त्या तन्न कल्पते, संयमविराधनादिदोषापत्तेः, द्वितीयपदे तु ज्ञानोत्सर्पणादिहेतुभिरनुज्ञातं, इत्याद्यनेकविधोपधिग्रहणधरणादिविधिः स्त्रीपशुपण्डकाद्यसंसक्तवसतिग्रहणादि-

उपधिभेदाः
॥ ७१ ॥

विधिश्च स्वयमभ्यूह्यः, विशेषार्थिना तु श्रीकल्पभाष्यमवगाहनीयमित्येषणासमितिः ॥ ३ ॥

पूर्वोक्तमौघिकं रजोहरणमुखवस्त्रिकादि औपग्रहिकं संस्तारकदण्डकादि अन्यदपि यत् किञ्चित्प्रयोजनविशेषे लोष्टका-द्यादि संवीक्ष्य प्रतिलेखिते हस्तादौ गृह्णीयात् तथैव भूम्यादौ निक्षिपेद्वा तत्सर्वं चक्षुषा निरीक्ष्य सम्यग् रजोहरणादिना यत्नेन प्रमार्ज्यैव च, न त्वन्यथा, पनककुंथुकीटिकादिहिंसातः संयमविराधनाया जातु वृश्चिकादिघट्टने चात्मविराधनादेरपि सम्भवात् इत्यादाननिक्षेपसमितिः । तथा चार्षम्–" ओहोवहोवग्गहिअं, दुविहं भंडगं मुणी । गिण्हंतो निक्खिवंतो अ, पउंजिज्ज इमं विहिं ॥ १ ॥ चक्खुसा पडिलेहित्ता, पमज्जिज्ज जयं जई । आइए निक्खिविज्जा वा, दुहओऽवि समिए सिया ॥ २ ॥ तथा–खज्जूरिपत्तमुंजेण, जो पमज्जे उवस्सयं । नो दया तस्स जीवेसु, सम्मं जाणाहि गोयमा ! ॥ १ ॥ " इति गच्छाचार-प्रकीर्णके उक्तत्वात् प्लक्षत्वचादिनाऽतिमृदुप्रमार्जन्या भूम्यादि तथा प्रमार्जयेत् यथा सूक्ष्मबादरजीवविराधना स्वल्पाऽपि न स्यात्, वस्त्रादीनां प्रतिलेखनापि तथैव विधेया यथा वायुकायादयो नेषदपि विराध्यन्ते, प्रमार्जनाप्रतिलेखनयोः जीवदयार्थमेव क्रियमाणत्वात्, तेनोभयत्र साधुना भृशमप्रमत्तेन भाव्यं, यदार्षम्–" पडिलेहणं कुणंतो मिहोकहं कुणइ जणवयकहं वा । देइ व पच्चक्खाणं वाएइ सयं पडिच्छइ वा ॥ १ ॥ ' मिथःकथा 'मिति मैथुनसम्बन्धां कथां, ' वाएइ 'त्ति वाचयति, कञ्चित्साधुं पाठयतीत्यर्थः, ' स्वयं प्रतीच्छती 'ति स्वयमालापकं दीयमानं गृह्णाति । ' पुढवीआउक्काए तेऊ वाऊ वणस्सइतसाणं । पडिलेहणापमत्तो छण्हंपि विराहओ होइ ॥ २ ॥ पुढवीआउक्काए तेऊ वाऊ वणस्सइतसाणं । पडिलेहणआउत्तो छण्हंपाराहओ होइ ॥ ३ ॥ एवं वपुःप्रमार्जनाप्रतिलेखनादावप्यप्रमत्तेन भाव्यं इत्यादाननिक्षेपसमितिः ॥ ४ ॥

प्रस्रवणोच्चारश्लेष्मकर्णाक्षिमलादि तथा परिष्ठापनार्हमशनपानाद्याहारवस्त्रपात्रादि हरितबीजपनककुंथुकीटिकादि-

रहिते अचित्ते स्थण्डिले संयतो यतनया परिष्ठापयेत् । यतना चेयं-मूत्रजलादि स्तोकं स्तोकं पृथक् पृथक् प्रदेशे व्युत्सृज्यं यथा प्रवाहो न स्यात् तत्कालं च शुष्यति, अशनादि च भस्मादिना संमर्द्य तथा व्युत्सृज्यं यथा कीटिकादिविषयो न स्यात्, वस्त्रादि तु श्लक्ष्णश्लक्ष्णखण्डीकृत्य यथा गृहस्थव्यापारणादिदोषो न स्यात्, उच्चारादिस्थंडिलगुणाश्चागमे एवमुक्ताः " अणावायमसंलोए, परस्सऽणुवघाइए। समे अज्झुसिरे आवि, अचिरकालकयंमि अ ॥ १ ॥ विच्छिन्ने दूरमोगाढे,नासन्ने बिलवज्जिए । तसपाणबीयरहिए, उच्चाराईणि वोसिरे ॥ २ ॥ " 'अणावाय' त्ति अनापातः असंलोकश्च परस्य यत्र १ उपघातः कुट्टनादिना उड्डाहादिर्न यत्र २ समे अलुठने३ अझुसिरे यत्तृणादिभिश्छन्नं न,तत्र हि वृश्चिकादिर्दशति कीटिकादि वा प्लाव्यते ४ अचिरकालकृते द्विमासिके ऋतौ वह्न्यादिना प्रासुकीकृते, द्वितीय ऋतौ तु तन्मिश्रं स्यात्, यत्र तु वर्षासु ग्राम उषितः स प्रदेशो द्वादश वर्षाणि स्थंडिलं५ विस्तीर्णे जघन्यतोऽपि हस्तमाने ६ दूरमवगाढे दूरमधोऽवगाह्याश्यादिना तापेन जघन्यतोऽपि चत्वार्यङ्गुलानि यावत्प्रासुकीकृते ७ अनासन्ने द्रव्यासन्नं धवलगृहादीनामारून्नं न व्युत्सृजति, भावासन्नमतिवेगे आसन्नमेव व्युत्सृजति ८ बिलवर्जिते ९ त्रसप्राणबीजरहिते १० । एवं विधिना परिष्ठापने पारिष्ठापनिकासमितिः ॥ ५ ॥

अथ गुप्तीनां प्रस्तावः, तत्र मनोगुप्तिः, मनश्च सत्यादिभेदाच्चतुर्द्धा, यदुक्तं प्रज्ञापनावृत्तौ "सद्भूतवस्तुचिंतनपरं सत्यं १ तदितरदसत्यं २ धवादिमिश्रवहुशोकेष्वशोकवनमेवेदमिति चिन्तकं सत्यामृषा, व्यवहारेण चेदमुच्यते, तत्त्वतस्त्वसत्यमेवेदं यथाचिंतितार्थायोगात् ३ चैत्र! घटमानयेत्यादि चिंतकमसत्यामृषा ४, इदमपि व्यवहारेणैव, अन्यथा विप्रतारणबुद्धिपूर्वकमसत्येऽन्तर्भवति,अन्यत्र तु सत्य इति॥ तदेवंविधस्य मनसो गोपनं गुप्तिः, सा च त्रिधा-आर्त्त-

रौद्रध्यानानुबंधिकल्पनाजालवियोगः प्रथमा १ शास्त्रानुसारिणी परलोकहिता धर्मध्यानानुबन्धिनी माध्यस्थ्यपरिणतिर्द्वितीया २ कुशलाकुशलमनोवृत्तिनिरोधेन योगनिरोधावस्थाभाविन्यात्मारामता तृतीया ३, यदाहुः–“ विमुक्तकल्पनाजालं, १ समत्वे सुप्रतिष्ठितम् २। आत्मारामं ३ मनस्तज्ज्ञैर्मनोगुप्तिरुदाहृता ॥ १ ॥” इह चार्त्तध्यानं चतुर्द्धा–अनिष्टशब्दादीनां सर्वकालमत्यंतं विप्रयोगचिंता १, एवं रोगादिवेदनाया विप्रयोगचिन्ता २ इष्टशब्दादीनां सर्वकालमत्यर्थं संयोगाध्यवसायः ३ दिव्यभोगर्द्धिराज्यादिनिदानाध्यवसायश्च ४, रौद्रमपि चतुर्द्धा–हिंसानुबन्धि १ मृषानुबन्धि २ स्तेयानुबंधि ३ विषयसंरक्षणानुबन्धि ४ च, तत्राद्यमतिक्रोधादिना द्वेष्यं प्रति वधवेधबन्धनाङ्कनहिंसनपुरदेशभङ्गादिचिन्ता १ द्वितीयं पिशुनासभ्यासद्भूतभूतघातकादिवाक्प्रणिधानं २ तृतीयं परस्वहरणचिन्ता३ तुर्यं शब्दादिविषयसाधनरक्षार्थं सर्वेषामविश्वसनेनोपघात एव श्रेयानिति दुर्ध्यानं ४। आर्त्तरौद्रध्यानपरित्यागात्मिकायां च प्रथमायां मनोगुप्तौ आर्षमपि मनोगुप्तिलक्षणं सूचितं, तच्चेदम् “संरंभ समारंभे, आरंभे अ तहेवय। मणं पवत्तमाणं तु, निअत्तिज्ज जयं जई ॥ १ ॥” संरंभः–संकल्पः, स च मानसः, तथाऽहं ध्यास्यामि यथाऽसौ मरिष्यतीत्येवंविधः,समारम्भः–परपीडाकरोच्चाटनादिनिबन्धनं ध्यानम्, आरम्भः–अत्यन्तसंक्लेशतः परप्राणापहारक्षममशुभध्यानमेव १, द्वितीया मनोगुप्तिर्धर्मध्यानानुबन्धिनी, धर्मध्यानं च चतुर्भेदमापरमपदप्राप्ति सर्वार्थसिद्ध्यवन्ध्यबीजभूतसर्वभूतहितभगवदाज्ञाचिन्तनं १ रागद्वेषकषायकलुषितात्मनां भवद्वयेऽपि विविधापायचिन्तनं २ प्रकृतिस्थितिप्रदेशानुभागभेदभिन्नशुभाशुभकर्मविपाकचिन्तनं ३ भूर्भुवःस्वस्त्रयात्मकचतुर्दशरज्जुप्रमाणलोकतद्गतजीवादिस्वरूपचिन्तनं ४ चेति २, तृतीया तु मनोगुप्तिः शुक्लध्यानानुगता योगनिरोधावस्थाभाविनी, शुक्लध्यानं च चतुर्द्धा-द्रव्यास्तिकादिनयैरेकद्रव्ये उत्पादस्थितिभङ्गादिपर्यायचिन्तनात्मकं नामतः पृथक्त्ववितर्कं सवीचारं १ एकस्मिन् पर्याये उत्पाद-

स्थितिभङ्गादीनां चिन्तनरूपं नाम्ना एकत्ववितर्कमविचारं २ तृतीयं मोक्षगमनप्रत्यासन्नकाले मनोवाग्योगद्वये निरुद्धे सत्यर्द्ध-निरुद्धकाययोगत्वेनोच्छ्वासनिश्वासादिसूक्ष्मकायक्रियस्य केवलिनः सूक्ष्मक्रियानिवर्त्याख्यं ३ चतुर्थं तस्यैव निरुद्धयोगस्य शैलेशीगतस्य व्युपरतक्रियाऽप्रतिपात्याख्यं ४ इति मनोगुप्तिः ६ ॥

वागपि सत्यासत्यादिभेदाच्चतुर्द्धा, तत्स्वरूपं च भाषासमितौ प्रागुक्तं, तस्या गुप्तिर्वाग्गुप्तिः, सा च द्विविधा-मुखनयनभ्रूविकारशिरश्चालनकरचरणाङ्गुल्याच्छोटनादिसंज्ञालोष्टक्षेपोर्ध्वीभावकासितहुंकृतथूत्कृतक्षुतोच्छ्वसितनिःश्वसितलेखनादिसंकेतपरिहारेण यन्मौनकरणं सा प्रथमा वाग्गुप्तिः १, द्वितीया तु भाषासमितिवन्निरवद्यादिगुणा वाक्प्रवृत्तिः इति वचनगुप्तिः ७ ॥

कायगुप्तिरपि द्विधा-कायचेष्टानिवृत्तिलक्षणा १ यथागमोक्तविविधकायचेष्टानियमलक्षणा २ च, तत्राद्या देव १-मनुष्य २ तिर्यक्कृत ३ आस्फलनपतनाद्यात्मसंवेदनीय ४ रूपचतुर्विधोपसर्गपरीषहसन्निपातेऽप्यक्षोभ्यस्य ऊर्द्धस्थस्योपविष्टस्य सुप्तस्य वा प्रलम्बितभुजद्वन्द्वस्य साधोः कायोत्सर्गेणान्यथा वा कायस्य निश्चलीभावो योगनिरोधं कुर्वतः सर्वथा शरीरचेष्टापरिहारो वा १, द्वितीया तु शयने उपवेशने निक्षेपे आदाने गमने स्थाने इन्द्रियव्यापारादौ च स्वच्छन्दवृत्त्यविधिकायचेष्टापरिहाररूपः कायचेष्टानियमः २, तत्र शयनं रात्रावेव न दिवा, ग्लानाध्वश्रान्तवृद्धादीन् वर्जयित्वा, तत्रापि प्रथमयामेऽतिक्रान्ते गुरूनापृच्छ्य प्रमाणयुक्तायां वसतौ भूमिं संवीक्ष्य संप्रमृज्य च संस्तरणपट्टकद्वयं संहत्य आस्तीर्य च मूर्द्धानमधश्च कायं सपादं मुखवस्त्रिकारजोहरणाभ्यां प्रमृज्यानुज्ञापितसंस्तारकावस्थानः पठितपञ्चनमस्कारसामायिकसूत्रः कृतवामबाहूपधान आकुञ्चितजानुकः कुक्कुटीवद्वियति प्रसारितजङ्घो वा प्रमार्जितक्षोणीतलन्यस्तचरणो वा भूयः संकोचसमये प्रमार्जितसंदंशक उद्वर्त्तनकाले च मुखवस्त्रिकाप्रमृष्टकायो नात्यन्ततीव्रनिद्रः शयीत, प्रमाणयुक्ता तु वसतिर्हि स्तत्रय-

प्रमिते भूप्रदेशे प्रत्येकं सभाजनानां साधूनां यत्रावस्थानं सकलावकाशपूरणं च स्यात्, तथा उपवेशनं यत्र प्रदेशे क्रियेत स्यात् तं चक्षुषा निरीक्ष्य रजोहरणेन च प्रमृज्य वहिर्निपद्यामास्तीर्योपविशेत्, उपविष्टोऽप्याकुञ्चनप्रसारणादि तथैव कुर्वीत, वर्षादिषु च पीठादिपूक्तथैव सामाचार्योपविशेत्, दण्डादिविषये निक्षेपादाने अपि प्रत्यवेक्ष्य प्रमृज्य च विधेये, गमनमप्यावश्यकप्रयोजनवतः साधोः पुरस्ताद्युगमात्रप्रदेशसंनिवेशितदृष्टेरप्रमत्तस्य त्रसस्थावरभूतानि संरक्षतोऽत्वरया पदन्यासमाचरतः प्रशस्तं, स्थानमप्यूर्द्धस्थितिलक्षणमवष्टम्भादि च प्रत्यवेक्षितप्रमार्जितप्रदेशविषयम्, इन्द्रियाणां स्वस्वविषयं प्रति व्यापारणमपि यथा रागद्वेषादिपापहेतुर्न स्यात्तथैव युक्तम्, उक्तमपि योगशास्त्रे "उपसर्गप्रसङ्गेऽपि, कायोत्सर्गजुषो मुनेः। स्थिरीभावः शरीरस्य, कायगुप्तिर्निगद्यते ॥ १ ॥ शयनासननिक्षेपादानचङ्क्रमणेषु च। स्थाने च चेष्टानियमः, कायगुप्तिस्तु सा परा ॥ २ ॥" इति कायगुप्तिः ॥ इह समितयः प्रवीचाररूपाः, गुप्तयस्तु प्रवीचाराप्रवीचाररूपाः, प्रवीचारो नाम कायिको वाचिको वा व्यापारः, कुशलां निरवद्यादिगुणोपेतां वाचमुदीरयन् समितो गुप्तोऽपि च स्यात्, गुप्तेः प्रवीचाररूपतयाऽप्यभिधानात्, अतः समितो नियमाद्गुप्तः, गुप्तस्तु समितत्वे नियमाद्भाज्यः, यो हि कायवाचौ निरुध्य शुभं मन उदीरयन्नेकाग्रमना धर्मे स्यात् स गुप्तः स्यात् न समितः, समितेः प्रवीचाररूपत्वात्, यस्तु कायवाचौ सम्यक् प्रयुङ्क्ते स गुप्तोऽपि समितोऽपि, यदुक्तं श्रीकल्पभाष्ये—"समिओ नियमा गुत्तो गुत्तो समियत्तणंमि भइअव्वो। कुसलवइमुदीरंतो जं वइगुत्तोऽवि समिओऽवि ॥ १ ॥ जो पुण कायवईओ निरुज्झ कुसलं मणं उदीरेइ। चिट्ठइ इक्कग्गमणो सो खलु गुत्तो न समिओ उ ॥ २ ॥" गुप्तिषु च समितीनामन्तर्भावोऽपि भवति, यदुक्तं तत्रैव—वाइगसमिई बिइआ तइआ पुण माणसा भवे समिई। सेसाउ काइआओ मणो अ सव्वासु अविरुद्धो ॥ १ ॥" अस्या व्याख्या—वाचिकसमितिः सा द्वितीया—वाग्गुप्तिर्मन्तव्या,

यदा किल भाषासमितो भवति तदा यथा भाषाया असमितिप्रत्ययकं कर्मबन्धं निरुणद्धि तथा वागगुप्तिप्रत्ययमपि कर्मबन्धं निरुणद्धि, एवं भाषासमितिवाग्गुप्त्योरेकत्वं, तृतीया पुनरेषणाख्या समितिः मानसी–मानसिकोपयोगनिष्पन्ना, किमुक्तं भवति ?–यदा साधुरेषणासमितो भवति तदा श्रोत्रादिभिरिन्द्रियैर्हस्तमात्रधावनादिसमुत्थेषु शब्दादिषूपयुज्यते, अत एवास्या मनोगुप्तेश्चैकत्वं, शेषास्तु समितय ईर्याआदाननिक्षेपोच्चारादिपारिष्ठापनिकाख्याः कायिक्यः–कायचेष्टानिष्पन्नाः, अत एवासां तिसृणामपि कायगुप्त्या सहैकत्वं, 'मणो अ सव्वासु अविरुद्धो' त्ति मानसिक उपयोगः सर्वासु पञ्चस्वपि समितिष्वविरुद्धः, समितिपञ्चकेऽप्यस्तीति भावः, अत एव मनोगुप्तस्य सचेष्टस्य सर्वासां समितीनां मनोगुप्त्या सहैकत्वं मन्तव्यमिति ॥ एताश्चाष्टावपि प्रवचनमातर इत्युच्यन्ते, आभ्यो द्वादशाङ्गीरूपस्य सकलस्य प्रवचनस्य प्रसवाद्, उक्तं हि–"एआ पवयणमाया दुवालसंगं पसूआओ"। तथा "एताश्चारित्रगात्रस्य, जननात् परिपालनात्। संशोधनाच्च साधूनां, मातरोऽष्टौ प्रकीर्त्तिताः ॥ १ ॥" एतासु सकलमपि प्रवचनमन्तर्भवति, यदार्षम्–"दुवालसंगं जिणक्खायं, मायं जत्थ उ पवयणं ॥" तथाहि–ईर्यासमितौ प्राणातिपातविरमणव्रतमवतरति, तद्वृत्तिकल्पानि च शेषव्रतानि तत्रैवान्तर्भावमुपयान्ति, तेषु च न तदस्ति यन्न समवतरति, यत उक्तम्–"पढमंमि सव्वजीवा बीए चरमे अ सव्वदव्वाइं। सेसा महव्वया खलु तदेगदेसेण नायव्वा ॥ १ ॥" इत्यर्थतः सर्वमपि प्रवचनमिह मातं। भाषासमितिरतु सावद्यवचनपरिहारतो निरवद्यवचोभाषणात्मिका, तथा च वचनपर्यायः सकलोऽप्याक्षिप्त एव, न च तद्बहिर्भूतं द्वादशाङ्गम्, एवमेषणासमित्यादिष्वपि स्वधिया भाव्यं, यद्वा सर्वा अप्यमूश्चारित्ररूपाः, यदुक्तं योगशास्त्रे–"सर्वसावद्ययोगानां, त्यागश्चारित्रमिष्यते। कीर्त्तितं तदहिंसादिव्रतभेदेन पञ्चधा ॥ १ ॥ अथवा पञ्चसमितिगुप्तित्रयपवित्रितम्। चरित्रं सम्यक्चारित्रमित्याहुर्मुनिपुङ्गवाः ॥ २ ॥ सर्वात्मना यती- कायगुप्तिः॥

न्द्राणामेतच्चीरित्रमीरितम् । यतिधर्मानुरक्तानां, देशतः स्यादगारिणाम् ॥ ३ ॥ ” इति ॥ चारित्रं च ज्ञानदर्शनाविनाऽभावि, नचैतत्त्रितयातिरिक्तमन्यदर्थतो द्वादशाङ्गमिति सर्वास्वप्येतासु सर्वं प्रवचनमन्तर्भवति । एतासां च बहुमानमात्रयोगोऽपि निस्समानफललाभाय जायते जन्तूनां, किं पुनः सम्यक्समाराधनोपयोगः ?, पुण्यसारकुमारस्येव, तत्कथानकं यथा—

सुश्रावकाढ्या श्रावस्तीत्यस्तीह भुवि विश्रुता । नगरी यत्पुरः स्वर्गिनगरी न गरीयसी ॥ १ ॥ गिरीशगिरिशृङ्गतुङ्गाः शृङ्गारणकारणं नगरलक्ष्म्याः । यत्र विभांति विहारा हारा इव सद्गुणस्थितयः ॥२॥ (आर्या) अद्वितीयकमलाविलासिनो, विस्फुरन्नयपथानुयायिनः । बिभ्रतः पुनरपूर्वसंपदं, यत्र भांत्युभयथा प्रजाः पुरा ॥३॥(रथोद्धता)तत्र शत्रुसहस्राणां, दिशंस्त्रासं सहस्रशः । राजा सहस्रवीर्याख्यः, सहस्राक्ष इवापरः ॥४॥ यज्जैत्रयात्रासु विचित्रचित्रवादित्रमात्राधिकघोरघोषैः । द्वेपिव्रजानां हृदयानि पूर्वं, स्फुटं स्फुटंति स्म ततस्तु कर्णाः ॥५॥(उपजातिः) हस्तीन्द्रस्येव हस्तिन्यः, सहस्रांशोरिवांशवः । राज्यः सहस्रं तस्यासन्, श्रीसहस्रगुणश्रियः ॥६॥ क्रमेण तासां सर्वासां, सर्वाद्भुतवपुःश्रियः । प्रतिरूपाणीव पितुः, पुत्रा आसन् सहस्रशः ॥७॥ निधिर्बुद्धिसहस्राणां, सहस्रसचिवाग्रणीः । सहस्रबुद्धिरित्यासीदमात्यस्तस्य भूपतेः ॥८॥ चतुरान् चतुरः पुत्राननु सौभाग्यसंपदा । पुत्रिकाश्चित्रकारिण्यः,सप्तासंस्तस्य मंत्रिणः॥९॥पुत्रिकाः प्रचुराश्चेति,मानमर्हन्ति नो जने । तास्तस्य जज्ञिरे मान्या, वैशिष्ट्येऽर्घ्ये हि यद्वपि ॥ १० ॥ पुत्रिकाऽथ मंत्रिपतेरष्टमी कष्टमीयुषी । कुरूपत्वेन सामान्या, सा मान्या तेन नाजनि ॥११॥ कृष्णां । कुरूपामन्येद्युस्तां दास्यास्तनयामिव । पृथ्व्यां लुठंतीं दृष्ट्वाऽवक्कोऽपि सामुद्रिकाग्रणीः ॥ १२ ॥ मागमान्या ततो मान्या, राज्ञीयमत्रनीतितः । राजाधिराजजननी, भाविनी च न संशयः ॥ १३ ॥ इयं हि महतः पुत्री, कुलीना कस्यचिद्ध्रुवम् । सत्याणा (त्वया) सम्यगित्युच्चैर्ब्रुवे लक्षणवीक्षणात्॥१४॥श्रुत्वेत्यमात्यः सत्योक्तसंकेतात् सत्यमेव तत् । निश्चित्य तं च

सत्कृत्य, तां सुतां बहुमन्यत ॥ १५ ॥ तस्या विवाहयोग्यत्वे, जाते वप्ताऽयचिन्तयत् । विज्ञोत्तमा कस्यचिद्राज्ञः, प्रदेयेयं प्रदेयवत् ॥ १६ ॥ अन्ये नृपवरा दूरतरा देशांतराश्रयाः । आसन्नास्तु नृपाः सर्वे, नृपस्यैतस्य सेवकाः ॥ १७ ॥ ददे तदेतस्य परं, पुरा सन्ति सहस्रशः । राज्यः प्रकृष्टा मत्पुत्र्या, निकृष्टायाः क चादृतिः ? ॥१८॥ प्राचुर्ये किल कर्पूरकस्तूर्यादेरनादृतिः । अप्राचुर्ये तु हिंगुलवणादेर्भृशादृतिः ॥१९॥ प्राचुर्येऽपि विशिष्टस्यानिष्टता स्यान्न कस्यचित् । भूयस्तरापि न क्वापि, शर्करा कर्करायते ॥ २० ॥ विशिष्टवस्तुप्राचुर्ये, न सामान्यस्य मान्यता । कूरकर्पूरतृप्तस्य, कदन्ने स्याद्रतिः कथम् ? ॥ २१॥ तथापि कन्या विद्या च, श्रेष्ठस्थाने नियोजिता । नियोजकस्य कीर्त्यै स्यादन्यथा तु विपर्ययः ॥ २२ ॥ ध्यायन्निति नरेन्द्राय, स प्रादादुपदामिव । धरित्रीशोऽपि मन्त्रीशदाक्षिण्यादुदुवाह ताम् ॥ २३ ॥ परमन्तःपुरे तस्या, दास्या इव चिरादपि । भूपतिः कुपित इव, प्रैक्षतापि न सम्मुखम् ॥ २४ ॥ अन्येद्युरवनीनेता, मन्त्रिनेतारमब्रवीत् । सुतेष्वेतेषु मे राज्ययोग्यस्ते प्रतिभाति कः ? ॥ २५ ॥ सोऽप्युवाच नृदेवेदं, देव एव विवेदितान् । पिता पुत्रस्य पुत्रोऽपि, पितुः सम्यग् स्वरूपवित् ॥ २६ ॥ नृपः प्राह महामात्य !, सत्यं किन्त्वेषु सूनुषु । संपूर्णगुण एकोऽपि, नेक्ष्यते तरुवन्मरौ ॥ २७ ॥ नयविनयविक्रमदमौदार्यं गांभीर्यधैर्यचातुर्यम् । तेजः स्थैर्यं विद्या निर्व्यसनत्वं यशोऽर्थित्वम्॥२८॥(आर्या)निर्लोभता सुभगता कृतज्ञता सुकृतशीलता सुकुलम् । आज्ञापरता जनता सम्मतिरिति राज्ययोग्यगुणाः ॥ २९ ॥ युग्मम् । असंपूर्णगुणाश्चैते, एकद्वित्रिचतुर्गुणाः । नागुणे नाप्यसंपूर्णगुणे राज्यार्हता मता ॥ ३० ॥ बीजं राज्यं बलं दानं, दृष्टिर्विद्या हितोक्तयः । सत्पात्रे सत्फलं दद्युरसत्पात्रे त्वसत्फलम्॥३१॥मन्त्र्याह यदि मत्पुत्र्याः,पुत्रः स्यात्तर्हि निश्चितम् । संपूर्णगुण एवासौ,संभवीति विदग्धवाग्॥३२॥तया मन्त्रिगिरा मन्त्रिपुत्री पृथ्वीपतेः प्रिया । प्राग्नाम्नाऽथार्थतोऽप्यासीदाशामात्रेऽप्यहो फलम् ॥ ३३ ॥ शुभः शुभस्वप्नगर्भ-

स्तस्यां गर्भः क्रमादभूत् । मेरूर्व्यामिव मन्दारः, शुक्ताविव च मौक्तिकम् ॥३४॥ सत्पुण्यसौहृदैः प्रादुरीहैर्दोहदैर्मुदा । क्रमा-
दित्रा पूर्यमाणैः, सोऽवर्द्धत सहर्द्धिभिः ॥३६॥ दोहदानुसारेण, नृपेण निरणीयत । सुतस्य भाविनस्तस्य, प्राज्यसाम्राज्य-
संगमः ॥ ३६ ॥ प्रजाप्रीत्या रसमये, समयेऽसूत सा सुतम् । प्राचीव पार्वणं चन्द्रं, माणिक्यं मणिभूरिव ॥ ३७ ॥ तदोच्च-
पुत्रप्रसवादिवोच्चत्वं ग्रहैः स्थितम् । विदग्धवादीदैवज्ञोऽप्यस्य यशस्वित्वमैरयत् ॥ ३८ ॥ तस्याः सुनोर्जन्ममहे, महीशेन महीयसि ।
निर्मापिते प्रजाः सर्वा, विस्मयाद्वर्मैयरुः ॥ ३९ ॥ अर्थतः पुण्यसारं तं, नामतोऽपि पृथूत्सवैः । चक्रे नृपः पुण्यसारं, ह्येवं
सत्यार्थनामता ॥ ४० ॥ पञ्चधात्रीपाल्यमानं, लाल्यमानं नृपादिभिः । तं वर्द्धमानं वयसा, महसा यशसा श्रिया ॥ ४१ ॥
द्वासप्ततिकलालीलाऽभ्यस्तनिस्तुलकौशलम् । चातुर्यौदार्यगाम्भीर्यधैर्यादिरेकमास्पदम् ॥ ४२ ॥ द्वात्रिंशल्लक्षणं लोकप्रिय-
करणैरेषितम् । वीक्ष्यैषिपुर्द्विपुत्र, राज्यलुब्धाः परे सुताः ॥४३॥ राज्ञा विज्ञाय तद्विज्ञाग्रण्याऽचिंति सुता अमी । मैनं मैनि-
कवन्मीनं, विश्रब्धं वधिषुर्मुधा ॥ ४४ ॥ बहूनां दुस्सहो द्वेषो, विशेषान्मत्सरचिंतानाम् । तद्रत्नयत्नकरणं, श्रेयस्करमथायती
॥ ४५ ॥ ध्यात्वेति धात्र्यधीशेन, बह्वमन्यन्त ते सुताः । विशिष्टवस्त्रर्पणादौ, लघुः पुनर्व्यमन्यत ॥४६॥ ततः स तैः प्रति-
पदं, नृपमानमदोद्धतैः । गृहदास इवाहासि, तथा यथाऽत्यदूयत ॥ ४७ ॥ ततः पितृभ्रातृमत्वान्, परासन्न पराभवान् । नि-
र्विण्णो निरगाद् गेहाद्देहाज्जीव इवासकौ ॥४७॥ तदाह—कुसुमस्तबकस्येव, द्वयी वृत्तिर्मनस्विनः । मूर्ध्नि वा सर्वलोकस्य, स्या-
द्वैत वन एव वा ॥ ४९ ॥ नृसिंहः सिंहवन्निर्भीर्निःसहायः स साहसी । निशि निर्गत्य नगराद्यावत् प्राग् प्राग् दिशं व्रजेत्
॥ ५० ॥ तावद्वामाऽभवद्धूम्ना, भैरवी भैरवस्वरा । प्रायिद्वत्थ प्रवत्स्येऽथ, दक्षिणो दक्षिणां दिशम् ॥ ५१ ॥ दक्षिणा तत्क्षणा-
त्र, शिवाऽभूदशिवाश्रया । तस्मिन् प्रतीच्यां यात्यासीद्दक्षिणा घूकघूत्कृतिः ॥ ५२ ॥ उदीच्यां चलिते त्वस्मिन्, सव्यातोऽ-

भूद् भुजंगमः । किमेतदिति संभ्रान्तस्तथैव स ततः स्थितः ॥ ५३ ॥ यतः-"न निमित्तद्विषां क्षेमो, नायुर्वैद्यकविद्विषाम् । न श्रीर्नीतिद्विषामेवमपि धर्मद्विषां नहि ॥ ५४ ॥" अध्वचिन्तां प्रपन्नोऽसौ, प्रसुप्तोऽपि तदर्त्तितः । यावन्निद्राति नो तावद्वाणी दिव्याऽभवद्दिवि ॥ ५५ ॥ किं न निद्रासि निश्चिन्तश्चिन्तां किं कुरुषे मुधा ? । यच्चिन्ताकर्तृ जागर्त्ति, तव दैवं दिवानिशम् ॥ ५६ ॥ विस्मितः स ततोऽध्यासीत्, किमिदं वाग्विजृंभितम् । कथं निश्चिन्तता मेऽत्र, भाविनी वनवर्त्तिनः ? ॥ ५७ ॥ यद्वा दिव्यं वचः श्रव्यं, नोल्लंघ्यं ज्ञानिवाक्यवत् । तदत्रैव दैवपरः, सुखनिद्रां न किं श्रये ? ॥ ५८ ॥ विचिन्त्येति त्यक्तचिन्तो, हेलयाऽपि प्रमीलया । महेलयेव स्ववशीचक्रेऽसौ वशिचक्र्यपि ॥ ५९ ॥ स्वल्पनिद्रा महान्तो हीत्युत्थितः स क्षणान्तरे । अधःकृतस्वर्गिसौधे,सौधे स्वर्णमणीमये ॥६०॥ सप्तभूमे भूमिकायां, सप्तम्यां मणिकुट्टिमे । अतुल्यदिव्यपल्यंके, स्वं निविष्टं स दृष्टवान् ॥ ६१ ॥ युग्मं ॥ रत्नोद्योतैस्तदा तत्र, परितोऽपि प्रसृत्वरे । तेन न ज्ञातमधुना, रात्रिर्वा यदिवा दिवा ॥ ६२ ॥ निसर्गनित्योद्योतैकसर्ग्यः स्वर्ग्यः किमेषकः ? । यद्वा मानवमात्रस्य, कुतस्त्या स्वर्गसंगतिः ? ॥ ६३ ॥ किं स्वप्नः किं भ्रमः कश्चिदिन्द्रजालमथो किमु । दैवतस्फूर्जितं किंवा, सैवं यावद् व्यतर्कयत् ॥६४॥ युग्मं ॥ तावज्जयजयारावसांराविणपरायणाः । प्रधानपुरुषास्तत्रागत्य सत्यमिदं जगुः ॥ ६५ ॥ श्रीसागरेऽत्र नगरे, शब्दादर्थाच्च विश्रुते । श्रीराजाभिधया राजा, राजते राजसद्यशाः॥६६॥ निरपत्यस्य तस्योच्चैरपत्याप्त्यर्त्तिवर्त्तिनः ।प्रीत्येकपात्रं पित्रादेः,पुण्यभूश्चित्रकृत् श्रियाम्॥६७॥सर्वांगीणा गुणैराढ्या,सर्वाङ्गीणसुलक्षणा ।सर्वांगीणकलादक्षा,सा जज्ञे यौवनोन्मुखी॥६८॥तस्या वरस्य विश्वेऽपि, प्रवरस्य नरेश्वरः । निजां राज्यश्रियं दित्सुरुत्सुकोऽभूद्वराप्तये ॥ ६९ ॥ सर्वत्रान्वेषणेऽप्येष, क्ष्मापः क्वापि परं वरम् । न तादृशं दृशाऽद्राक्षीन्न श्रुत्या श्रुतवानपि ॥ ७० ॥ ततः स चिन्तयाऽत्यन्तमातुरः सुरसेवितम् । श्रीवीतरागं संपूज्य, पूजयाऽष्ट-

प्रकारया ॥ ७१ ॥ कायोत्सर्गं निसर्गेण, यावत्तस्थौ स्थिराशयः। दिव्या दिव्याविरभवद्भारती तावता हिता ॥ ७२ ॥ भो भूप ! भूयसितरां, किं चिंतां कुरुषे मुधा ?। जन्ममृत्युविवाहादि, यद्दैवनियतं नृणाम्॥७३॥आगामिन्यां हि यामिन्यां,तुर्ये यामे समागमी ।शुभादृष्टसमाकृष्टः प्रकृष्टः कन्यकावरः ॥ ७४ ॥ मणीमन्दिरतल्पेऽस्मिन्, अल्पेतरशुभोदयः । निविष्टः शिष्टधीविष्टः, स द्रष्टव्यस्त्वया स्यात् ॥ ७५ ॥ आकस्मिकविस्मापकगिराऽमृतकिराऽनया । प्राप्तविश्वैश्वर्य इव, मुमुदे मेदिनीश्वरः ॥ ७६ ॥ स्थानेतुं नृपेणाथ, महिता वयमागताः । तदस्मत्स्वामिनं स्वामिन्!, प्रीणयस्व स्वदर्शनात् ॥ ७७ ॥ ततः प्रीतः कुमारेन्द्रस्तं नरेन्द्रमुपागतः । प्रणतः प्रीतितस्तेन, स्वोत्संगेऽङ्गजवद्दधे ॥ ७८ ॥ प्राज्यप्रणयपूर्वं च, प्रोक्तः स्वीकुरु मे कनीम् । अतुच्छस्वच्छहृद्वत्स !, वत्सलां स्वीकुरुष्व नः ॥ ७९ ॥ इत्युक्त्वा स्वकनीं दत्त्वा, कारयित्वा महामहान्। सोऽन्यदत् स्नेहसद्वाह,स्वराज्यमपि दत्तवान् ॥८०॥अहो भाग्यभृतां भाग्यं,जागरूकमभंगुरम् । यद्विदेशेऽप्येकपदे,देशाधीशत्वमित्यभूत् ॥८१॥कन्याराज्यार्पणेन स्वां,कृतार्थीकृत्य संपदम् । स्वं कृतार्थयितुं राजा,प्रव्रज्याप परं पदम्॥८२॥नृपोऽथ पुण्यसारोऽसौ,राज्यं प्राज्यसुखं सृजन् । सौराज्यं प्रथयन् पृथ्व्यास्तत्र वृत्रघ्नवद् व्यभात्॥८३॥नृपायोपददेऽन्येद्युर्वैदेशिकेन केनचित् ।सप्तसप्तेः सप्तिरिव, सप्तिः सर्वाङ्गलक्षणः ॥ ८४ ॥ क्षत्रियाणां हयैस्तुष्टिर्विशिष्य च महीभुजाम् । इत्यारुह्य स तं खेलद्गतिर्यावदखेलयत् ॥ ८५ ॥ तावद् व्योम्न्युत्पपातोच्चैरुच्चैःश्रवः समुत्सुकः । संगंतुमिव सोऽदश्यः, क्षणादासीच्च दूरगः ॥ ८६ ॥ तेन स्तेनकलां कृत्वा, हृत्वा निन्ये नृपः पुरे । आढ्यवैताढ्यभूभृत्पानूपुरे रथनूपुरे ॥ ८७ ॥ तत्र विद्याभृतां नेता, विद्यासिद्ध इति श्रुतः । स्वधाम्न्यानाययत् मान्यनृभिर्मान्यममुं महैः ॥ ८८ ॥ सप्रेमालापमालाप्यार्द्धासने विनिवेश्य च। प्रोचे नः प्राज्यपुत्राणां, पुत्र्येका प्रेमपात्र्यभूत् ॥ ८९ ॥ नैमित्तिकवरः पृष्टस्तस्या वरकृतेऽवदत् । युवा योऽश्वाहृतः प्रातः, पुरेऽत्रैति परेद्यवि ॥ ९० ॥

स एव तव कन्याया, वरः स्मर इवापरः । औचितीमंचतीत्यत्र, मा कृथाः संशयं वृथा ॥ ९१ ॥ इत्युक्त्या त्वद्भपुर्न्यक्षलक्षणै-रपि दक्ष ! ते । निश्चित्य विश्वोत्तमतां, सुतामेतां मुदे ददे ॥ ९२ ॥ यथा यथा निरीहत्वं, महत्त्वं हि तथा तथा । इत्यसौ नाटयन्नुच्चैर्निरीहत्वं व्युवाह ताम् ॥ ९३ ॥ महोत्सवैर्महोत्साहे, विवाहे विहिते नृपः । ददेऽस्मै ग्रामसौधादि, सैन्यभृत्यादि चोच्चकैः ॥ ९४ ॥ सुकृतस्य कृतस्य प्राग्, महिमा न हि मानवान् । विद्याधराधिपोऽप्येवं, प्रादात्तस्मै सुतादि यत् ॥ ९५ ॥ एवं च काञ्चनपुरनगरेशो निजाङ्गजाम् । प्राग्वद् व्यवाहयत्तेन, महान् स्वीक्रियते न कैः ? ॥ ९६ ॥ तद्वद्देवोत्तरश्रेणिनेतारौ खेचरेश्वरौ । तस्मै ददाते स्वकनीं, लोकः पूजितपूजकः ॥ ९७ ॥ विद्याधरीपरीरम्भलम्भलोलुपतां भजन् । विद्याभृत्सत्कृतस्तत्र, सुखं सोऽस्थात्कियच्चिरम् ॥ ९८ ॥ विद्योद्भवानां सोऽनेकविधानां तत्र सर्वतः । प्रेक्षकोत्सुक-चर्याणामाश्चर्याणामवेक्षणात् ॥ ९९ ॥ अमात्राणां नित्यचैत्ययात्राणां स्तवनादपि । दिव्यभोगर्द्धिभोगैश्च, कृती स्वमकृतार्थ-यत् ॥१००॥ युग्मम् ॥ खेचराणां खेचरर्द्धौ, सुराणां सुरऋद्धियत् । न चित्रं किं तदाश्चर्यं, भूचरः खेचरर्द्धिभुक् ॥ १०१ ॥ माद्यद्रमालवालेऽथ, मालवाह्वयमण्डले । अलकाया उज्जयिन्यामुज्जयिन्यामभीश्वरः ॥ १०२ ॥ विक्रमाकरनामाभूद्विक्रमाक्रान्त-शात्रवः । तस्य त्रस्यन्मृगीनेत्रा, पद्मनेत्राह्वया प्रिया ॥ १०३ ॥ युग्मं ॥ अन्या अपि नृपस्यासन्, मान्या राज्ञः परःशताः । सर्वासामपि संभूताः, सुता अपि परःशताः ॥ १०४ ॥ पट्टदेव्यास्तु दिव्याङ्गी, पुत्र्येकाऽभवच्चिरात् । स्वस्वप्राक्पुण्य-निर्माणानुसारिण्यो हि संपदः ॥ १०५ ॥ स्वल्पस्य मानोऽनल्पः स्यादित्यैवेव स्वदैवतः । पुत्रादिभ्योऽपि पित्रादेर्मान्याऽऽसीत् श्रीरिवाङ्गिनी ॥ १०६ ॥ कलाश्चतुःषष्टिमितास्तया चतुरया ग्रयात् । लीलया समकद्यन्त, साक्षिमात्रं गुरुः पुनः ॥ १०७ ॥ विशिष्य वेणुवीणादौ, प्रवीणा सा तथाऽभवत् । यथा तन्नादवशगा, विवशाः स्युः सुरा अपि ॥१०८॥ ततस्तया प्रतिज्ञातं,

सचेतसोऽप्यचेतसः ॥१२७॥ निस्तुलां स्व कलां काञ्चित्पर्षदन्तः प्रदर्श्य सः। तत्सर्वमर्पमामास, हासयन् सकलानपि ॥१२८॥ अथो पृथूत्सवापारपरम्परापुरस्सरम्। पूर्णप्रतिज्ञां तां राज्ञः, कन्यां पाणौ चकार सः ॥ १२९ ॥ हस्त्यश्वस्वर्णमाणिक्य-वारस्त्रीकिङ्करादिकम्। यद्ददेऽस्मै नृपस्तस्य, सङ्ख्यां ख्यातुं क्षमेत कः ? ॥ १३० ॥ इतः शतद्वारपुरे, प्रजापालनलालसः। प्रजापालः प्रजापालप्रजापालव्रजार्थितः ॥ १३१ ॥ स्त्रीभिर्नृपा न तृप्यन्तीत्यसौ राज्ञीसहस्रभुक्। पुत्र्यश्चासां सहस्रा-णि, वृद्धिः स्त्रीणां हि सर्वतः ॥१३२॥ निषिध्यते मते दैगम्बरे स्त्रीणां महोदयः। तद्गृहे तु तदा जज्ञे, तासामेव महोदयः ॥१३३॥ श्रूयते यः श्रुते सप्तविंशत्या गुणकारकः। साधिकः स्त्रीषु नृभ्योऽसौ, युक्त एतन्निदर्शनात् ॥ १३४ ॥ पुत्रिकाः प्रचुराश्चेति, निरादृतिरिलापतिः। पुत्रार्त्तिं दधदत्यन्तं, तुर्यमप्याश्रयद्वयः १३५॥ सोऽन्यदा स्वहृदाऽध्यासीन्नासीद्यापि मेऽङ्ग-जः। तत्कस्य राज्यं दास्यामि ?, कथं लास्यामि संयमम् ? ॥१३६॥ इति चिन्तातुरः पृथ्वीश्वरः सरसभक्तिभाग्। जिनेन्द्रं पूजयेद्यावत्तावद्व्योम्नि बभूव वाग्॥१३७॥मा मुधा वसुधाधीश !, व्यधाश्चिन्तां स्वचेतसि। नाप्यते चिन्तितं पूर्वं, संचितं सुकृतं विना ॥१३८॥ अद्यापि पट्टदेव्यास्ते, बुधाष्टमीवदष्टमी। मान्या कन्या प्रभविता, भविता च तवोदयः ॥ १३९ ॥ तस्याश्च भर्त्ता यो भावी, भर्त्ता राज्यश्रियोऽपि सः। त्वद्दौहित्रः क्रमादत्र, शाशिता भविता भुवः ॥ १४० ॥ श्रुत्योः सुधासुते-रेतदन्तरिक्षोदितश्रुतेः। भूपतिः पिप्रिये प्रोच्चैर्दौहित्राशापि नाल्पका ॥ १४१ ॥ महिष्या हि सुतेवेह, जने मान्येत नो सुतः। इतीव सूते स्म सुतां, महीशमहिषी पुनः ॥ १४२ ॥ तस्यास्तारावदष्टम्याः, श्रेष्ठाया जनने नृपः। वर्द्धापयित्र्यै प्रीत्याऽदात्, मौलिवर्जाङ्गभूषणान् ॥ १४३ ॥ महीभर्त्रा महर्ध्याऽस्याः, जन्मादिमा महामहाः। निरमाप्यन्त प्रथमपुत्रवद्विस्मयावहाः ॥ १४४ ॥ दुर्जयद्वेषिविजयावाप्तिरस्याः समुद्भवे। जातेति विजयाख्याऽस्याः, ख्याप्यते स्म नृपादिभिः ॥ १४५ ॥ अथा-

सौभाग्यसौभाग्यदक्षत्वादिगुणैः परैः । अन्याः कन्या जयन्तीव, जयन्नयाख्यां भुवि व्यधात् ॥ १४६ ॥ बाला बालामृत-
रश्मिकलावदतिनिर्मला । वर्द्धमाना क्रमान्मानातिगमाना जनेऽजनि ॥ १४७॥ चतुःषष्टिकलाप्राप्तकौशला कौशलागतात् ।
गुरोरक्लेशतोऽभूत्साऽऽदर्शसंक्रान्तिनीतितः॥१४८ ॥ वराहंतायां जातायां,तस्याः पितेत्यचिन्तयत् । वरो भावी सुरोक्तोऽस्याः,
कः कथं कुत्र कर्हि वा ? ॥१४९॥ अत्रान्तरेऽन्तरिक्षस्थामरेणोक्तं नरेश्वर! । समग्रां कुरु सामग्रीमन्यग्रोऽस्याः करग्रहे ॥१५०॥
लग्नक्षणे क्षणेनैव, दैवताद्भुतशक्तितः । सर्वाङ्गभूषणधरः, स्फुटीभाव्यत्र भो -वरः ॥ १५१ ॥ प्राग्देवतोक्तेः संवादाद्देवतो-
दितया तया । गिरा धराधिपः सर्वं, तथा चक्रे यथाविधि ॥ १५२ ॥ अथोत्सवपयोद्दामविमानेनामरेन्द्रवत् । पुण्य-
सारवरस्तत्रावततार सखेचरः ॥१५३॥ सविस्मयाद्भुतं सर्वैरयं समयदोदयम् । प्रेक्षाश्चक्रे च चक्रे च, कन्योद्वाहमहामहम् ॥१५४॥
यौवराज्यं महासत्यङ्कारं तत्करमोचने । प्रीतः प्रादत्त भूवित्तं, किमदेयं मनोमते ? ॥ १५५ ॥ राजप्रसादप्रसरद्रसोल्लासेन
तत्र सः । समुद्रः शुशुभे युक्तं, चित्रं तु न जडाशयः ॥ १५६ ॥ पत्न्या तत्र तया साक्षाल्लक्ष्म्या लक्ष्मीपतिः समम् । सुचिरं
बुभुजे भोगान्, भोगाः सर्वत्र भोगिनाम् ॥१५७॥ क्रमात्तस्याः सुते जातेऽद्भुते रूपादिभिर्नृपः। दौहित्रप्राप्तितः प्रीतो, जामात्रे
राज्यमप्यदात् ॥१५८॥भूभर्त्ताऽथ कुभर्तृत्वं, मुक्त्वा भुक्त्वा सुभर्तृताम् । चारित्रलक्ष्म्या भर्त्ताऽभूत्,तद्भवेऽपि शिवश्रियः॥१५९
॥ पुण्यसारे कुमारेऽथ, निर्गते नगरात्पितुः । दोदूयन्ते स्म पित्राद्या, निजाङ्गजवियोगतः ॥१६०॥शोधितः सर्वतोऽप्येष, पुरुष-
प्रेषणादिना । हस्तपर्यस्तमणिवत्, कुत्रापि प्रापि नैव तैः ॥ १६१ ॥ अपारदुःखाकूपारपारप्राप्त्यै नृपस्ततः । नैमित्तिकादीन्
पप्रच्छ, वत्सशुद्धिं जगुश्च ते ॥१६२॥ स्थाने स्थाने भवत्पुत्रस्त्वत्तनूजः सदा सुखी । दूरदूरतरं याता,स्याता चाभीष्टभोगभुक्
॥ १६३ ॥ राज्यप्रदानावसरेऽचिरेण रुचिरे मते । इष्टदिष्टविशिष्टश्रीसङ्गः सङ्गस्यते स ते ॥ १६४ ॥ संवादवादिनामेवं,

विज्ञानां सदृशोक्तिभिः । पुत्रादिनिर्णयेनोच्चैः, स पुत्राह्वयेव पिप्रिये ॥ १६५ ॥ इतश्च निश्चलोत्तुङ्गरङ्गदुर्गसुदुर्गमे । दुर्गमे नाम नगरे, नगरे श्रीस्थिरीकृतौ ॥ १६६ ॥ जज्ञे नरपतिस्तत्र, नाम्ना नरपतिः श्रुतः । यस्य प्रोद्यत्प्रतापाग्नौ, पतङ्गन्ति परे पुरा ॥ ॥१६७॥ युग्मं । तस्य राज्ञः पट्टराज्ञ्यास्तनुजा तनुजन्मसु । प्रथमा प्रथमानश्रीर्नामतः प्रथमिन्यभूत् ॥ १६८ ॥ प्रोच्चैः प्राच्यमपत्यं हि, नृणामायाति मान्यताम् । विशिष्टे च विशेषेण, विशिष्य च महीयसाम् ॥ १६९ ॥ इत्यसौ पञ्चधात्रीभिः, पाल्यमानाङ्कमङ्कतः । संचरिष्णुः स्नेहवृत्त्याऽलङ्करिष्णुः कुलं पितुः ॥१७०॥सार्द्धं स्पर्द्धिष्णु रूपाद्यैर्वर्द्धिष्णु शैशवं क्रमात् । अतीयाय पिता चिन्तामितीयाय च चेतसि ॥ १७१॥ युग्मं ॥एतस्य कन्यारत्नस्य, निःसपत्नस्य संपदा । कोऽनुरूपो वरो भावी, को नु तादृक्शुभोदयः ?॥१७२॥अस्याः कन्या विश्वकन्याऽतिशायिन्याः स्वयंवरः। स्वयंविदुष्या युज्येत,स्वयंवरणहेतवे॥१७३॥ ध्यात्वेत्यखण्डश्रीवल्लिमण्डपं मञ्चमंडितम् । प्रोद्दण्डं मण्डयामास, स स्वयंवरमण्डपम् ॥ १७४ ॥ पुत्रैः सत्रा तत्र धात्रीसुत्रामाणो निमन्त्रिताः । अहंपूर्विकयाभ्येयुरहो विषयगृध्नुता ॥ १७५ ॥ भो जनं होकमेवेह, कारयिष्यामि भोजनम् । इत्युक्ते निर्णये भोक्तुं, द्विजाः श्राद्धेऽपि नेयृति ॥१७६॥तद्रीत्या तत्र विज्ञातेऽप्युद्वाहे स्पृहयालवः । सर्वेऽप्येवमधावंत,धिग्मुधैव महोद्यमम् ॥१७७॥ युग्मं ॥ यद्वा के कामरागेण, लोभोद्रेकेण वा जगत् । महान्तोऽपि न मुह्यन्ति, कोऽप्यहो मोहविप्लवः ॥१७८॥ शतद्वारनरेन्द्रस्य,निमन्त्रणमथागतम् । पुण्यसारः प्रविज्ञाय, विज्ञाग्रणीर्व्यचिन्तयत्॥१७९॥ईदृक्संदिग्धदग्धार्थे,विदग्धस्य न युज्यते । गन्तुं स्थातुं तु नो शक्यं, कौतुकोत्तानमानसैः ॥ १८० ॥ तद्गुप्तवृत्त्या यास्यामि, मञ्चे स्थास्यामि चोच्चकैः। प्रेक्षिष्ये कौतुकं जातु, वरिष्येऽपि स्वयंवराम्॥१८१॥ ध्यात्वेत्थं प्रेष्य पित्रादीन्, नैष्यामीतिमिषात् स्थितः। सुरस्मृतेर्ययौ तत्र, स स्वयंवरवासरे ॥१८२॥ स्वयंवरे नरेन्द्रेषु, निविष्टेषु सुसौष्ठवम् । मञ्चोपरिष्ठात् परितः, प्रसरति प्रेक्षकव्रजे ॥ १८३ ॥कुब्जीभूतः कौतुकोत्कः,

सत्रा तत्रागतः स्थितः । परान् पर्यस्य मञ्चेऽन्त्ये, वेषमेष विशेषयन् ॥ १८४ ॥ यथैते पार्थिवास्तद्वद्वयमप्यागमाम भोः ! । सर्वसाधारणे कार्ये, को निवार्येत केन वा ? ॥१८५॥ इत्यादिवादिना लोकाः, प्रश्नकुब्जेन, कौतुकात् । केलिं केलिकिलेनैव, यावत् सर्वेऽपि कुर्वते ॥१८६॥ तावत्तत्रोत्सवैः मातृदिव्यवेषा सखीसखा । सुखासनस्था भूस्यातुः, काऽन्या कन्या सुरेशितुः ? ॥१८७॥ त्रिभिर्विशेषकं ॥ प्रतीहार्या प्रतिपदं, वर्णितान्निखिलान्नृपान् । आकर्णितानपि अनाकर्णितानिव साऽमुचत् ॥१८८॥ माऽमीषां पङ्क्तिभेदोऽभूदेकपङ्क्तिनिवेशिनाम् । इतीव साऽत्यजत् सर्वान्नेष्टाप्तिः सुकृतं विना ॥ १८९ ॥ संशयाशातपैर्हर्षोत्सुक्यमोहनिराशताः । निर्वेदापत्रपासूयाऽनुशयाद्यपि ते दधुः ॥ १९० ॥ तदानीं पितरौ केऽपि, केऽपि कन्यां स्वयंवरम् । केचित्केचिच्च कर्म स्वं, हा दुराशां त्वपावदन् ॥ १९१ ॥ सर्वेष्वपि नृपेष्वेवं, लङ्घितेषु तया रयात् । कुपिताऽऽह प्रतीहारी, ननु कुब्जममुं वृणु ॥ १९२ ॥ तदुक्तं सत्यतां नेतुमिव प्राक्स्वप्नदर्शनात् । सा कुब्जकण्ठे सोत्कण्ठं, द्राग् न्यधत्त वरस्रजम् ॥ १९३ ॥ स्वयंवरोत्सवदिनात्, प्राग् दिनेऽभ्यर्चनादिना । सचितया तया गोत्रदेवताराध्यतोद्यता ॥ १९४ ॥ सा स्वप्ने प्राह हे वत्से !, यदीच्छेः प्रवरं वरम् । सुरूपं वृणीयास्तत्कुब्जाङ्गं जगदुत्तरम् ॥ १९३ ॥ इतिस्वप्नानुसारेण, तान्नृपान् कुसुमोपमान् । त्यक्त्वा कुब्जमियं भेजे, कुब्जमब्जमिवालिनी ॥ १९४ ॥ सुवृतं सुवृतं चेति, घुष्टिर्वृष्टिश्च कौसुमी । तदा दिवोऽभवद्विश्वविस्मयाद्वयदायिनी ॥१९५॥ इयत्सु सत्सु क्ष्माभृत्सु, कुब्जः कन्यां कथं भजेत् ?। केऽपीति व्यब्रुवन् यावदीर्ष्येर्ष्यालवस्तदा ॥ १९६ ॥ वाणी प्रमाणीभूताऽभूत्तावता दिवि दैवती । भो भूपाः ! सैष भूपानामग्रणीः पुण्यसारराट् ॥१९७॥ योऽमुं नमस्यते तस्य, शिक्षां दास्याम्यसंशयम् । पुण्यैरगण्यैरेतस्याकृष्टः स्पष्टमिदं ब्रुवे ॥ १९८ ॥ इत्युक्त्वा विसिष्मियिरे, सर्वेऽपि च चकम्पिरे । चिन्तयाञ्चक्रिरे चायं, मान्यश्चक्रीव निश्चितम् ॥१९९॥ स्वसूनोर्नाममात्रस्य, श्रवणात् श्रवणामृतात् ।

पुण्यसारपिता त्वेवं, चिन्तयामासिवांस्तदा ॥ २०० ॥ पुण्यसारनृपः कोऽयं, किं भवेन्मे तनूद्भवः ? । यद्वा नाम्नां च धाम्नां च, सादृश्यं हि पदे पदे ॥२०१॥ इत्ययं चिन्तयेद्यावत्तावद्देव इव स्फुटः । ज्ञातोऽस्मीति तदाऽभूद् द्राक्, पुण्यसारः स्वरूपभाग् ॥२०२॥ उत्थाय च पितुःपादद्वंद्वमद्वंद्वभक्तितः।विननाम न नाम काप्यौचित्यव्यत्ययः सताम् ॥ २०३ ॥ युक्तमेव महानंदसङ्गमे सूनुसङ्गमे । सविता निर्वृतात्माऽभूच्चित्रं सत्कर्मयोगतः ॥२०४॥ वृत्तान्ते तस्य विज्ञाते, निर्दिष्ले निखिलैर्नृपैः । सचक्रेऽसौ यथौचित्यं, महान् सत्क्रियते न कैः ? ॥२०५॥ तत्कन्योद्वाहसोत्साहमहोत्सवमवाहतः । महीयान् महिमाऽस्याभूत्, पुण्यैः किंवा सुदुर्लभम् ? ॥२०६॥ सर्वैरुर्वीश्वरैः सार्द्धं, सूनुमाकार्य कार्यवित् । सहस्रवीर्यनृपतिस्ततः प्राप पुरं निजम् ॥२०७॥सप्रद्युम्नः ससामन्तः, कमलाकान्तलीलया । स विवेश विशामीशः, पुरं निरुपमैर्महैः ॥ २०८ ॥ शुभेऽह्नि पुण्यसारस्य, भंभासारस्य सोऽन्यदा । राज्याभिषेकं प्रौढर्द्ध्या, प्रसेनजिदिव व्यधात् ॥२०९॥ राज्यप्रदानतः प्रास्तप्रतिबन्धः सुधीः स्वयम् । विधिपूर्वं प्रवव्राज, वव्राज च परं पदम् ॥२१०॥ अपि प्राक्प्राप्तराज्यर्द्धिः, पितृराज्येन तेन सः । रामवद्दिद्युतेऽत्युच्चैः, पितृश्रीर्हि मुदेऽधिकम् ॥२११॥ प्राग्दिव्यवचसा साकं, सर्वैरुर्वीश्वरैरसौ । सन्मान्यते स्म नितमां, कन्यासैन्यादिदानतः ॥ २१२ ॥ प्रसिद्धिर्जयिनी नृणामित्यन्यैरप्यसौ नृपैः। अमानि मानिभिरपि, स्वस्वढौकनढौकनैः ॥२१३॥ येऽत्राज्ञासिपुरविज्ञास्ते, स्वस्वप्रौढिमदोद्धुराः। तांस्तथा भापयामास, प्राग्वत् सान्निध्यकृत् सुरः ॥ २१४ ॥ यथा वृथा दर्पकथास्त्यक्त्वा कृत्वा वहूपदाम् । सिषेविरे किङ्करवत्, पुण्यसारं नरेश्वरम् ॥२१५॥ युग्मं ॥ एवमष्टासु काष्ठासु, तस्याज्ञाऽऽदित्यदीप्तिवत् । सर्वत्राप्यप्रतिहता, पृथव्यन्तः प्रासरीसरीत् ॥ २१६ ॥ अखण्डखण्डत्रितयाधिपत्यमभवद्भुवि । हरेरिव नरेशस्य, तस्यैवं सुरसन्निधेः ॥ २१७ ॥ नो दिग्जयाय यात्रा च, नच सैन्यस्य सूत्रणा । न युद्धं न नियुद्धं वा, न दूतप्रेषणाद्यपि ॥२१८॥ न दानभेदौ नो दण्डो,न सुराराधनादि च।

तस्यैश्वर्यं तथापीदृगहो सुकृतवल्गितम् ॥ २१९ ॥ तस्य त्रिखण्डाधिपतेः, सौधर्माधिपतेरिव । आसन् विशिष्टा अष्टापि, पट्टदेव्यः पुरोदिताः॥२२०॥तासां प्रत्येकमेकैकः,सहस्रः किल सेवकः। अष्टौ सहस्रा इत्यासन्, राज्योऽन्या अस्य भूपतेः॥२२१॥ विश्रुतोऽपि श्रुताम्भोधिर्विरक्तोऽपि विशुद्धिभृत् । निःसङ्गोऽपि सुसङ्गोऽथ, तत्रागाद्गुरुपुङ्गवः ॥ २२२ ॥ पुण्यसारनृपः सार-परिवारपरिष्कृतः । सुरेन्द्र इव सर्वद्धर्या, मुदा तं वन्दितुं ययौ ॥ २२८ ॥ प्रदक्षिणादिविधिना; वंदनादिपुरस्सरम् । गुरोः पुरो यथास्थानं, निषसाद स सादरम् ॥ २२४ ॥ यो यस्मात्प्रौढिमारूढः, स तं प्रौढिं परां नयेत् । नो चेत्कृतघ्नता काऽस्य, कथं वाऽस्य शुभोदयः? ॥२२५॥ तदुक्तं-धर्मादधिगतैश्वर्यो, धर्ममेव निहंति यः। स कथं सुगतिं यायात्, स्वस्वामिद्रोहपातकी?॥ २२६ ॥ तस्मान्महद्भिः प्राग्धर्मात्, प्राप्तसाम्राज्यमद्धिभिः । विशेषेण निषेव्योऽसावित्यन्योऽन्योपकारिता ॥२२७॥ अमहद्भि-र्महत्त्वाय, महद्भिस्तत्प्रवृद्धये । सम्यग् धर्मः समाराध्यः, सर्वदाऽप्यप्रमद्वरैः ॥ २२८ ॥ तस्यैवं चातकस्येव, वारिमुग्वारिपायिनः । देशनामृतपानेन, बभूवान्नाथितंभवः ॥२२९॥ अथो समयमासाद्य,गुरुं समयसागरम् । चतुर्ज्ञानभृतं मुख्यमप्राक्षीत् प्राग्भवं नृपः॥ २३० ॥ गुरुः प्राह महाभाग !, महापुरपुरे पुरा । महानन्दाभिधानोऽभूत्, महार्द्धिर्महास्तिकः ॥२३१॥ तनूजस्तस्य पित्राद्यैः, शिक्षितोऽप्यारितकक्रियाः । धर्मं प्रमाधन् संसारे, प्रार्थंस्तान् द्वेष्यशिष्टधीः ॥२३२॥ धर्मसारेति तस्याख्या, पितृदत्ताप्यपार्थका । हास्यायेव जने जज्ञे, सान्वर्थे वोचिताऽभिधा ॥२३३॥ह्यमुद्यानमन्येद्युः, सहृदा सुहृदा सह । सहर्षं विहरन्नेष, कौतुकोत्तान-मानसः ॥२३४॥ निसर्गशमसंसर्गकायोत्सर्गस्थमेकतः। वानर्याऽनार्यया दीर्यमाणाङ्गं मुनिमैक्षत ॥२३५॥युग्मं.सर्वोऽप्युपद्रवाद्रक्ष्यः, किं पुनर्मुनिरित्यसौ । निवारितापि तेनोच्चैः, पिशाचीवात्यजन्न तम् ॥ २३६ ॥ तादृग्दुर्गोपसर्गेऽपि. निष्प्रकम्पः सुराद्रिवत्। अश्रीयत स तत्कालमेव केवलसंविदा ॥ २३७ ॥ यतिस्ततस्तं प्रत्यूचे, भद्रे! भज शमं हृदि । किं न चेतयसे सप्तभवासं द्वेषजं

फलम् ? ॥ २३८ ॥ सेत्युक्त्वैव स्थिता मन्त्रकीलितेवाथ विस्मयात् । तेन पृष्टोऽवदत् ज्ञानी, भोः प्रियेयं भवेऽत्र मे ॥२३९॥ अतिप्रेम्णा तदासक्तः, पित्रादिभ्योऽभवं पृथक् । धिग् पुत्रं स्त्रीमुखं मूर्खं, पित्रादिभ्योऽप्यवाङ्मुखम् ॥ २४० ॥ दैवादवाप्य सुगुरोः, श्राद्धधर्मं करोम्यहम् । निःश्रद्धेयं तु मिथ्यात्वमेव यत्तन्मिषान्मृषा ॥ २४१ ॥ निर्धर्मणीह कः स्नेह, इति मां शिथिलादृतिम् । दुष्टेयं द्वेष्टि वैराग्याद्, व्रतमादत्तवांस्त्वहम् ॥ २४२ ॥ मिथ्यात्वपोपादेषाऽतिद्वेषात् मयि मृता क्रमात् । मृत्वाऽभूदुरगी दुष्टा, धिक्कष्टं मौढ्यचेष्टितम् ॥ २४३ ॥ दैवात्तत्रागतं सा तद्वनान्तः प्रतिमास्थितम् । दृष्ट्वा मां दष्टुमायान्ती, मयूरेण हता मृता ॥ २४४ ॥ जाता मयूरी प्राग्द्वेषात्, मामुपद्रोतुमिच्छती । शुना जग्धा शुनी चैनं, वराही व्याघ्रिकाऽप्यभूत् ॥ २४५ ॥ सा धावन्ती मद्वधार्थमन्तर्गर्ते प्रपातुका । समग्राङ्गोपाङ्गभङ्गात्, प्लवङ्गैरप्युपद्रुता ॥ २४६ ॥ मृत्वाऽभूद्वानरीयं प्राग्वैरात् मय्युपसर्गकृत् । एकाङ्गी कोऽप्यङ्गभृतां, द्वेषो दुर्विषहः खलु ॥ २४७ ॥ सम्प्रत्यस्मद्गिरा जातिं, स्मृत्वाऽभूदुपशांतिभृत् । प्रबोधिताऽथ च भवे, निर्वेदमियमेष्यति ॥ २४८॥ क्षमयित्वा च मां मायं, प्रतिपद्य सपद्यपि । दिवि त्रिदिवदेवीत्वं, लब्ध्वाऽष्टाभिर्दिनैरियम् ॥ २४९ ॥ तस्मान्मिथ्यात्वविद्वेषौ, वर्जितव्यौ हितैषिणा । दुरन्ता दुर्गतिराद्यादपरात् नरकाद्यपि ॥ २५० ॥ रागोऽङ्गिनां दुर्निवारस्तस्माद् द्वेषो विशेषतः । धर्मद्वेषस्तु सर्वार्थहन्ताऽनन्तार्त्तिदुःखदः ॥ २५१ ॥ वयोऽवस्थाविशेषेण, न रागः प्रसरेत् क्वचित् । द्वेषस्तु विष्वक् प्रसरन्, दुष्पेषः स्याद्दषेरपि ॥२५२॥ श्रुत्वेति प्रतिबुद्धात्मा, धर्मसारोऽभ्यधात् प्रभो! । धर्मक्रियाद्विषः का मे, गतिः पापक्रियाजुषः ? ॥ २५३ ॥ सोऽपि प्रोचे प्राप्य पापं, सम्यगालोच्य चेत्त्वया । आराध्यते सुसाधोऽपि, धर्मस्तत्तेऽपि सद्गतिः ॥ २५४ ॥ तपःक्रियाभिग्रहाद्यं, दुःशकं सुशकं तु भोः! । स्वशक्त्याऽष्टप्रवचनमात्राराधनमाचर ॥ २५५ ॥ उत्कीर्णमिव सम्यक्त्वं, स्वचित्ते च स्थिरीकुरु । इयताऽपि तव प्रेत्य, सद्गतिर्निर्वृतिस्ततः ॥ २५६ ॥

तत्तथा प्रतिपेदानः, प्रपेदानः पदं निजम् । धर्मैकाग्र्यादभूत् सोच्चैः, पित्रादिप्रमदप्रदः ॥ २५७ ॥ सत्कर्मणां सधर्मैव, प्रीतिपात्रं स्वकोऽपिहि । स प्राक् पुत्रतयाऽभीष्टः, पुण्यैरपि ततोऽभवत् ॥ २५८ ॥ ततः प्रभृत्यसौ सम्यक्, सम्यक्त्वगुणभूषणः । ईर्यायां भाषणे पिण्डेषणे च त्रिविधात्मके ॥ २५९ ॥ समग्रग्राह्यवस्तूनां, निक्षेपादानयोरपि । मलमूत्रजलादेश्चोत्सर्गे स यततेतराम् ॥ २६० ॥ मनोवाक्कायगुप्तिष्वप्येवं स यतमानकः । गृहस्थोऽपि यतीन्द्राणां, निदर्शनतयाऽजनि ॥२६१॥ मा मृषा मेऽभिधानं भूदुपहासश्च मा क्वचित् । ध्यात्वेत्थं धर्मसारः स, स्वनामार्थमदीदृपत् ॥२६२॥ धर्ममाराध्य पितरि, क्रमात् स्वर्भोगभोक्तरि । धर्मसारोऽल्पसारोऽभूद्दैवाद् धिग् भवस्थितिम् ॥ २६३ ॥ यतः-" कृतप्रयत्नानपि नैति कांश्चन, स्वयंशयानानपि सेवते परान् । द्वयेऽपि नास्ति द्वितयेऽपि विद्यते, श्रियः प्रचारो न विचारगोचरः ॥ २६४ ॥ " अस्तिप्रानस्ति तस्यैकः, प्रीतिकृत् प्रातिवेश्मिकः । कौटुम्बिकः प्रकृत्याऽतिभद्रकः सोमनामकः ॥ २६५ ॥ सुप्रीतिवेश्मिकत्वे हि, लघोरप्यलघोरपि । परस्परेण सांनिध्याद्बहुधाऽप्युभयोर्गुणः ॥ २६६ ॥ लघुना लघुकार्याणि, लघु सिध्यन्त्ययत्नतः । महता च महत्कार्याण्येवं कार्यसुसाधता ॥ २६७ ॥ ईर्यादियतनाधर्मं, धर्मसारस्य वीक्षतः । कृषिकूपादिकारम्भसंरम्भं स्वं निनिन्दिवान् ॥ २६८ ॥ प्रशंसयाप्रासिवांश्च, धर्मसारं निरन्तरम् । तस्य प्रवचनप्राग्राराधनं तु विशेषतः ॥ २६९ ॥ एवं निन्दन्निजं तं च, श्लाघमानः सदाऽप्यसौ । प्रभूतारम्भमग्नोऽपि, पुण्यं प्राज्यमुपार्जयत् ॥ २७० ॥ चित्तेनैव सन्नियोगशिष्टं शिष्टात्मनामपि । महत्त्वादित्ययं चिन्तानितान्तातुरतामदात् ॥ २७१ ॥ सोमस्तथा तं विज्ञाय, वणिक्पुत्राय श्रेष्ठिवत् । स्वयं स्वं वित्तमेतस्मै, वाणिज्यार्थं वितीर्णवान् ॥ २७२ ॥ सामर्थ्ये सति योऽन्यार्थं, न साधयति दुर्मतिः । अरण्यपुष्पकूपादिकल्पं तस्य धनादिकम् ॥ २७३ ॥ तदाधारकर्णधारप्रयोगाद्विपदर्णवम् । तीर्त्वा प्राग्वत् सुखी सोऽभूदहो सांनिध्यकृद् गुणः ॥ २७४ ॥ कृतज्ञता

कृतिन्युच्चैरित्यसौ बहुमानयत् । विशिष्य तं तत्प्रभृति, स्थितिर्ह्येषा महात्मनाम् ॥ २७५ ॥ क्रमात् कौटुम्बिकः सोऽयं, स्वायुर्भुक्त्वा मृतस्ततः । प्राक् प्रोक्तपुण्यात् पुण्यात्मा, पुण्यसारो भवानभूत् ॥ २७६ ॥ धर्मसारः श्राद्धधर्माराधनात् प्रान्तसाधनात् । मृत्वाऽजनिष्ट सुमनःप्रष्ठोऽष्टमत्रिविष्टपे ॥ २७७ ॥ प्राग्भवं स्वं प्रयुक्तेनावबुध्यावधिना मनाक् । परोपकारप्रत्युपकारकारकताचिकीः ॥ २७८ ॥ यदा पित्रपमानोत्थादभिमानोद्धवाद्भवान् । नगरान्निरगाद् गुप्तं, तदाद्यवहितस्थितिः ॥ २७९ ॥ तत्तद्दिव्योक्तिभिस्तत्तद्दुःसाधसाध्यसाधनैः । संकेतित इवैकान्ते, सुरः सन्निदधे स ते ॥ २८० ॥ त्रिभिर्विशेषकं ॥ उपकारः कृतोऽल्पोऽपि, वटबीजमिवोत्तमे । प्रथात्यपारविस्तारं, पुरः पुरः परिस्फुरन् ॥ २८१ ॥ अष्टप्रवचनमात्राराधनायाः प्रशंसनात् । अष्टाष्टस्थानमहिमकन्याराज्याद्यवाप्तयः ॥ २८२ ॥ तवाभवत् परर्धिश्च, सर्वाङ्गीणापि यन्नृणाम् । पुण्यानुमोदनामात्रमप्यमात्रफलप्रदम् ॥ ॥ २८३ ॥ युग्मं ॥ यस्यानुमोदनामात्रादपीदृग् फलमाप्तवान् । तत् पुण्यं कुरु भोस्त्रेधा, द्वेधा सर्वेष्टसिद्धिदम् ॥ २८४ ॥ यतिवाक्यमिति श्रुत्वा, प्रतिबुद्धः स शुद्धधीः । सम्यक्त्वपूर्वकं सम्यक्, शक्त्येर्याद्युद्यतोऽजनि ॥२८५॥ इत्थं प्राज्येऽपि साम्राज्ये, तस्येर्याद्युपयुक्तता । कं न चित्रीयते किं वा, न स्यादवहितात्मनः ? ॥ २८६ ॥ यथा राजा तथैव स्युः, सर्वाः प्रायः प्रजा अपि । इतीर्याद्युपयुक्तत्वमेकच्छत्रं जनेऽप्यभूत् ॥ २८७ ॥ दध्यावध्यात्मधीर्धर्मजागर्यायां स कर्हिचित् । न सम्यक् समितिगुप्त्याराधना संयमाद्विना ॥२८८॥ किं च-प्रांतः कस्यापि नो ग्राह्यः, प्रायसः स्यात् स नीरसः । तद्राज्यादिरसं त्यक्त्वा, शमी शान्तरसं श्रये ॥ २८९ ॥ इक्षुवार्द्धिरसाः प्रान्ते, सेविताः स्युः परे रसाः । रसः शान्तरस्तु सुतरां, सरसः स्यात् पुरः पुरः ॥ २९० ॥ तेनार्येण विचार्येति, राज्ये न्यस्याङ्गजं निजम् । महिषीभिः सहाष्टाभिर्विधिवद् व्रतमाददे ॥ २९१ ॥ अधीतपूर्वी स चतुर्दशपूर्वीमपि क्रमात् । विशिष्याष्टप्रवचनमातॄराराधयत्तराम् ॥२९२॥ तदैकाग्र्याद्वैयग्र्याद्देवासौ दिवसान्तरे ।

आरूढः क्षपकश्रेणिं, श्रेणिं चिक्षेप कर्मणाम् ॥२९३॥ तदैव केवलावाप्त्या, सुरकृतमहर्धिभाक्। अष्टमवचनमात्राराधनाद्युपदेशतः ॥२९४॥ प्रतिबोधं प्रतिबोधं, प्रतिबोधेऽर्हदेहिनः । क्रमात् कैवल्यनिस्तुल्यसुखास्वादं स आसदत् ॥२९५॥ युग्मं ॥ इति पञ्चसमितिगुप्तित्रयमात्राराधनानिदर्शनतः । तत्र तनुत प्रयत्नं भविकाः शिवकामना यदि वः ॥२९६॥इति तपाश्रीसोमसुन्दरसूरिश्रीमुनिसुन्दरसूरिशिष्यश्रीरत्नशेखरसूरिविरचिते आचारप्रदीपे चारित्राचारप्रकाशकस्तृतीयःप्रकाशः ॥ (ग्रन्थाग्र १२२०-२८)

॥ अथ तपआचारः प्ररूप्यते, तत्र तप्यतेऽनेन देहकर्मादीति तपः, तदुक्तम्-“ रसरुधिरमांसमेदोऽस्थिमज्जाशुक्राण्यनेन ताप्यन्ते । कर्माणि चाशुभानीत्यतस्तपोनाम नैरुक्तम् ॥ १ ॥” तपश्च भवद्वयेऽपि सर्वार्थसाधकं, यतः-“ तपः सकललक्ष्मीनां, नियन्त्रणमशृङ्खलम् । प्रत्यूहप्रेतभूतादिरक्षामन्त्रो निरक्षरः ॥१॥ अथिरंपि थिरं वंकंपि उज्जुअं दुल्लहंपि तह सुलहं । दुस्सज्झंपि सुसज्झं तवेण संपज्जए कज्जं ॥ २ ॥ सव्वासिं पयडीणं परिणामवसादुवक्कमो भणिओ । पायमनिकाइआणं तवसा उ निकाइआणंपि ॥ ३ ॥ ” कर्मनिर्जरार्थमेव च तपस्तपनीयं, यत्परमार्षम् “ नो इहलोगट्ठयाए तवमहिट्ठिज्जा, नो परलोगट्ठयाए तवमहिट्ठिज्जा, नो कित्तिवण्णसद्दसिलोगट्ठयाए तवमहिट्ठिज्जा, नन्नत्थ निज्जरट्ठयाए तवमहिट्ठिज्जा ” इति ॥ अत एव प्रवचनप्रसिद्धानि नव निदानानि तपस्विना वर्जनीयानि, यतः-“यः पालयित्वा चरणं विशुद्धं, करोति भोगादिनिदानमज्ञः । स वर्धयित्वा फलदानदक्षं, कल्पद्रुमं भस्मयतीह मूढः ॥ १ ॥ निदानस्वरूपं चास्मदुपज्ञप्रतिक्रमणसूत्रवृत्तेर्ज्ञेयं । तपश्च षड्विधबाह्यषड्विधाभ्यन्तरभेदैर्द्वादशभेदं तस्याचरणं तपआचारः, यदार्षम्-‘ बारसविहंमिवि तवे सब्भंतरबाहिरे कुसलदिट्ठे । अगिलाइ अणाजीवी नायव्वो सो तवायारो॥ १ ॥ ” कुसलत्ति-कुशलैः तीर्थकरैर्दृष्टे-उपलब्धे, अग्लान्या-चित्तोत्साहेन न तु राज-

वेष्ठिरीत्या, यथाशक्ति वा, यतः–"सो अ तवो कायव्वो जेण मणो मंगुलं न चिंतेइ । जेण न इंदिअहाणी जेण य जोगा न हायंति ॥१॥" 'अणाजीवि' त्ति अनाशंसी इहलोकपरलोकाद्याशंसारहितः। तत्र बाह्यभेदा अनशनादयः षट्, अभ्यन्तरभेदास्तु प्रायश्चित्तादयः षट्, यदार्षम्–"अणसण १ मूणोअरिआ २ वित्तीसंखेवणं ३ रसच्चाओ ४। कायकिलेसो ५ संलीणया य ६ बज्झो तवो होइ ॥१॥ पायच्छित्तं १ विणओ २ वेआवच्चं ३ तहेव सज्झाओ ४। झाणं ५ उस्सग्गोऽविय ६ अब्भंतरओ तवो होइ ॥ २ ॥" तत्रानशनं द्विधा-इत्वरं यावज्जीविकं च, इत्वरं नमस्कारसहितादि श्रीवीरतीर्थे षण्मासपर्यन्तं, श्रीनाभेयजिनतीर्थे संवत्सरपर्यन्तं, मध्यमतीर्थकरतीर्थेषु त्वष्टौ मासान् यावत्, अत्र च श्रेणिप्रतरघनवर्गयवमध्यवज्रमध्यचन्द्रायणकनकावलीरत्नावलीमुक्तावलीसिंहनिष्क्रीडितादिकं विविधं तपोऽन्तर्भवति । यावज्जीविकं तु पादपोपगमनेङ्गिनीभक्तप्रत्याख्यानभेदाद् त्रिविधं, तत्र-निप्फाइआ य सीसा गच्छो परिपालिओ महाभागो। अब्भुज्जओ विहारो अहवा अब्भुज्जयं मरणं ॥ १ ॥ इति ॥ दशावयःपरिणामे सति देवगुरून्नत्वा तदन्तिके कृतानशनस्य गिरिगुहादौ त्रसस्थावरविरहिते स्थंडिले पादपवन्निमेषकरणादावपि निश्चेष्टस्याऽऽद्यसंहननिनो निष्प्रतिकर्मणो येन तेन संस्थानेन प्रशस्तध्यानेन प्राणान्तं यावदवस्थानं पादपोगमनं१, एवमिङ्गितप्रदेशेऽन्यानपेक्षस्यात्मनैवोद्वर्त्तनादि कुर्वतः सचेष्टस्य प्राणोत्क्रान्ति यावदवस्थानमिङ्गिनी२, यस्तु गच्छमध्यवर्ती समाश्रितमृदुसंस्तारकः समुत्सृष्टशरीरोपकरणममत्वस्त्रिविधं चतुर्विधं वा आहारं प्रत्याख्याय स्वयमेवोद्ग्राहितनमस्कारः समीपवर्त्तिसाधुदत्तनमस्कारो वोद्वर्त्तनपरिवर्त्तनादि कुर्वाणः समाधिना कालं करोति तस्य भक्तप्रत्याख्यानमनशनम्३, एतच्च नियमात् सप्रतिकर्मतया आर्यिकादीनामपि साधारणम्, उक्तं च-"सव्वाविअ अज्जाओ सव्वेविअ पढमसंघयणवज्जा। सव्वेऽवि देसविरया पच्चक्खाणेण उ मरंति ॥१॥" 'पच्चक्खाणेण' त्ति भक्तप्रत्याख्यानेनैवेत्यर्थः। त्रयमपि चैतन्निर्व्याघाते संलेखनापूर्वकमेव करोति,

अन्यथा आर्त्तध्यानसंभवाद्, उक्तं च-"देहम्मि असंलिहिए सहसा धाऊहिं खिज्जमाणीहिं। जायइ अट्टज्झाणं सरीरिणो चरमकालम्मि ॥ १ ॥" व्याघाते तु व्याधिविद्युद्गिरिभित्तिप्रपातसर्पादिरूपे संलेखनां विनापि, द्विविधमपि चैतदनशनं कृत्स्नकर्मक्षयहेतुः, यतः-"देहदुर्गमुदग्राणि, तावत्कर्माणि देहिनाम् । नोज्झन्ति यावदत्राम्बुप्रवेशोऽत्र निरर्गलः ॥ १ ॥ कषायविषयाहारत्यागो यत्र विधीयते । उपवासः स विज्ञेयः, शेषं लङ्घनकं विदुः ॥ २ ॥

अत्र दृढप्रहारिज्ञातं, यथा-कश्चिद्द्विजातिः प्रचण्डोऽन्यायीति राज्ञा पुरान्निर्वासितश्चौरपल्लीं प्राप्तस्तत्पतिना पुत्रत्वेन स्थापितस्तस्मिन्मृते पल्लीपतिर्जातः, सर्वत्र निर्दयप्रहरणाद् दृढप्रहारीति विश्रुतः, कुशस्थलग्राममन्यदा लुण्टितुं ययौ, तस्यैकस्मिन् दस्यौ निःस्वदेवशर्मद्विजधाम्नि भिक्षित्वा पक्वं पायसं हृत्वा गच्छति डिम्भरूपैः पूत्कारे कृते क्रुद्धद्विजेन दस्यून् पशूनिव परिघेण ताड्यमानान् वीक्ष्य पल्लीशस्तद्रक्षायै धावमानः संमुखीभूतां गां विप्रं विप्रीं चासन्नप्रसवां जघान, विप्रायाः कुक्षिच्छेदाद् द्विधाकृतं गर्भं प्रस्फुरन्तं वीक्ष्य सञ्जातकृपः सानुताप उद्याने साधुपार्श्वे आत्तव्रतो 'यत्राह्नि हत्यापापं स्मरामि तत्र न भोक्ष्ये क्षान्तिं च सर्वथा श्रयिष्ये' इत्यभिग्रहद्वयं लात्वा तत्रैव ग्रामे विहृतो, भिक्षार्थं गमने जनैराक्रोशादिभिस्तत्पापं स्मार्यमाणः कदापि नाभुङ्क्त, एवं षण्मास्या सिद्धः, इति प्रथमो भेदः ॥ १ ॥

ऊनमुदरमूनोदरं तस्य करणमूनोदरिका 'नाम्नि पुंसि चे'ति णकप्रत्यये रूपसिद्धिः, व्युत्पत्तिमात्रमेवेदं, शब्दप्रवृत्तिस्तूनतामात्रे, ऊनोदरिका च द्रव्यभावभेदाद् द्विविधा, द्रव्यत उपकरणभक्तपानविषया, तत्रोपकरणविषयोनोदरिका जिनकल्पिकादीनां तदभ्यासपरायणानां वा बोद्धव्या, न पुनरन्येषां, तेषामुपध्यभावे समग्रसंयमपालनायोगाद्, अथवाऽन्येषामप्यतिरिक्तोपकरणाग्रहणतो भवत्येवोनोदरिका, भक्तपानोदरिका पुनरात्मीयाहारमात्रापरित्यागतो विज्ञेया, आहारमानं च-' बत्तीसं किर

कवला आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलिआए अट्ठावीसं भवे कवला ॥ १ ॥ कवलस्स य परिमाणं कुक्कुडिअंडगपमाणमित्तं तु। जं वा अविगिअवयणो वयणंमि छुभिज्ज वीसन्तो ॥१॥"सा चाल्पाहारादिभेदतः पञ्चधा, यदाहुः-"अप्पाहार अवड्ढा दुभाग पत्ता तहेव किंचूणा। अट्ठदुवालससोलस चउवीस तहेक्कतीसा य ॥ १ ॥ अयमत्र भावार्थः-अल्पाहारोनोदरिका नाम एककवलादारभ्य यावदष्टौ कवलाः, अत्र चैककवलमाना जघन्या, अष्टकवलमानोत्कृष्टा, द्व्यादिकवलमाना तु मध्यमा १, एवं नवभ्यः कवलेभ्य आरभ्य यावत् द्वादश कवलास्तावदपार्द्धोनोदरिका २ त्रयोदशभ्य आरभ्य यावत्षोडश तावत् द्विभागोनोदरिका ३ सप्तदशभ्य आरभ्य यावच्चतुर्विंशतिस्तावत् प्राप्तोनोदरिका ४ पंचविंशतेरारभ्य यावदेकत्रिंशत्कवलाः तावत्किञ्चिदूनोदरिका ५, जघन्यादिभेदत्रयं सर्वत्र पूर्ववद्भावनीयम्, अनेनानुसारेण पानविषयोनोदरिकाऽपि भाव्या, तथा स्त्रीणामप्येवं पुरुषानुसारेण द्रष्टव्या। भावत ऊनोदरिका क्रोधादित्यागः, यदुक्तम्-" कोहाईणमणुदिणं चाओ जिणवयणभावणाओ उ। भावेणोणोदरिआ पन्नत्ता वीअरागेहिं ॥ १ ॥ " ऊनोदरिका च प्रत्यहं तपोरूपत्वात् परैर्विशिष्याज्ञायमानत्वाच्च बहुफला, उपवासादितपो हि यथा परैर्ज्ञायते न तथोनोदरिकेति, औनोदर्ये च नीरोगत्वादयो गुणाः, यतः-" हिआहारा मिआहारा, अप्पाहारा य जे नरा। न ते विज्जा तिगिच्छंति, अप्पाणं ते चिगिच्छगा ॥ १ ॥ " साधुमाश्रित्य मिताहारत्वं पिण्डनिर्युक्तावेवमुक्तम्-" अद्धमसणस्स सवंजणस्स कुज्जा दवस्स दो भागे। वाउपविआरणट्ठा छब्भागं ऊणगं कुज्जा ॥ १ ॥ " इह किल षड्भागीकृतस्योदरस्यार्द्ध-भागत्रयरूपम् अशनस्य सव्यञ्जनस्य-तक्रशाकादिसहितस्याधारं कुर्यात्, तथा तस्य द्वौ भागौ पानीयस्य, षष्ठं तु भागं वायुप्रतिचरणार्थमूनं कुर्यात्। " सीओ उसिणो साहारणो अ कालो तिहा मुणेअव्वो। साहारणंमि काले तत्थाहारे इमा मत्ता ॥ १ ॥ " इमा-अनन्तरोक्ता मात्रा-

ऊनोदरिकास्वरूपं ॥

प्रमाणं। अथ शीतोष्णकालयोर्मात्रामाह-"सीए दवस्स एगो भत्ते चत्तारि अहव दो पाणे। उसिणे दवस्स दुन्नि उ तिन्नि व सेसा उ भत्तस्स ॥ २ ॥" 'शीते' इति शीते काले द्रवस्यैको भागः, चत्वारो भक्तस्य, अथवाशब्दो मध्यमशीतसंसूचनार्थः, ततो मध्यमशीते द्वौ द्रवस्य त्रयो भक्तस्य, एवं मध्यमोष्णे काले द्वौ द्रवस्य शेषास्त्रयो भक्तस्य, अत्युष्णे तु त्रयो द्रवस्य शेषौ द्वौ भक्तस्येति। एवं मितनिरवद्याहारग्रहणे साधोः प्रत्यहमुपवास एव, यदाहुः-निरवज्जाहाराणं साहूणं निच्चमेव उववासो। देसूणपुव्वकोडिंपि, पालयंताण, सामण्णं ॥१॥"तथा षष्ठाष्टमादिविशेषतपस्तपनेऽपि पारणे ऊनोदरिकयैव विशेषलब्धयः संभवन्ति, यथा व्रतिनः सनखकुल्माषमुष्टिजलचुलुकमात्रपारणेन षण्मासीं यावन्नित्यषष्ठतपसा तेजोलेश्योत्पद्यते इति श्रीवीरजिनोक्तविधिना गोशालकस्य सोत्पेदे ॥ इत्यूनोदरिका २ ॥

वर्त्ततेऽनयेति वृत्तिः-भैक्षं तस्याः संक्षेपणं-ह्रासः, तच्च दत्तिपरिमाणकरणरूपमेकद्वित्र्याद्यगारनियमो रथ्यार्द्धग्रामग्रामनियमश्च, द्रव्याद्यभिग्रहाश्चात्रैवान्तर्भवन्ति, तत्र द्रव्यतोऽद्य मया निर्लेपभिक्षाद्येव एकद्व्यादिदत्तिरूपमेव कुन्ताग्रसंस्थितमण्डकाद्येव वा ग्राह्यमित्यादि, क्षेत्रत एकद्वित्र्यादिगृहस्वग्रामपरग्रामग्रामार्द्धादिलब्धमेव दायकेन देहलीं जङ्घयोरन्तर्विधायैव वा दत्तं ग्राह्यमित्यादि, कालतः प्रथमद्वितीयादिप्रहरादिनियतवेलायामेव ग्राह्यमित्यादि, भावतो लघुवृद्धनरनारीभूपिताभूपितसुखितदुःखितनिविष्टोर्ध्वदमशयितगौरकृष्णगानहसनरोदनादिपरदायकदत्तमेव ग्राह्यमित्यादि, एवं वृत्तिसंक्षेपः साधुभिः श्राद्धैश्च यथाशक्ति प्रत्यहं कार्यः, उक्तं च यतिदिनचर्यायाम्-"पइदिअहं चिअ नवनवमभिग्गहं चिंतयंति मुणिसीहा। जीअंमि जओ भणिअं पच्छित्तमभिग्गहाभावे ॥ १ ॥" तत एव च श्राद्धाः सम्प्रत्यपि सचित्तद्रव्यसंक्षेपाद्यभिग्रहं गृह्णन्ति, इदं च तपः षष्ठाष्टमादिभ्योऽपि दुस्साधमधिकतरफलं च, षष्ठाष्टमादि हि नियतं प्रत्याख्यायमानत्वेन निवृत्ताहारेच्छं च, इदं तु को वेद कदा द्रव्याद्यभिग्र-

हपूर्त्तिर्भाविनीत्यनियतप्रत्याख्यायमानत्वेन प्रत्यहमनिवृत्ताहारैश्छं च, अत एव कौशाम्ब्यां श्रीवीरजिनेन द्रव्यतः कुल्माषान् क्षेत्रतो दातृपादद्वयान्तर्देहलीसंभवे कालतस्तृतीययामे भावतो भूपपुत्री प्रेष्यत्वं गता निगडिता मुंडिता क्षुधिता रुदती सूर्पकोणेन यदि दास्यति तदैव पारयिष्यामीत्यभिग्रहो जगृहे, गृहे गृहे च प्रत्यहं भ्रमणे पंचदिनोनषण्मास्या चंदनवालातः सोऽप्यपूर्यत, भीमपाण्डवेनापि चारित्रं प्रतिपद्य कुन्ताग्रदत्तमेवोञ्छमादास्ये नान्यथा पुनरित्यभिजगृहे,-तस्य पुण्यात्मनः सोऽपि मासैः षड्भिरपूर्यत। न किञ्चिदपि दुर्लभं, सत्त्वनिर्णिक्तचेतसाम् ॥ १ ॥ इति वृत्तिसंक्षेपः ३ ॥

'रसत्यागो' रसानां-क्षीरदध्यादीनां विकारहेतुतया विकृतिशब्दवाच्यानां मद्यमांसमधुनवनीतानां दुग्धदधिघृततैलगुडावगाह्यादीनां च यथाशक्ति सर्वेषां कियतां वा सर्वदा वर्षषण्मासीचतुर्मास्याद्यवधि वा वर्जनं, यन्निशीथभाष्ये-"विगइं विगईभीओ विगइगयं जो उ भुंजए साहू। विगई विगइसहावा विगई विगइं बला नेइ॥ १॥" विगतिः दुर्गतिस्तस्या भीतो यः साधुः उपलक्षणात् श्राद्धादिरपि विकृतिं-दुग्धादिकां विकृतिगतं च-विकृतिमिश्रं क्षरेय्यादि शर्करामिश्रपानकादि च भुङ्क्ते तस्य दोषमाह-इयं विकृतिर्विकृतिस्वाभावा अवश्यं विकृतिकारिणी अत इयं विकृतिर्बलादपि नरकादिकां विगतिं प्रापयत्येवेत्यर्थः। यदाऽपि तु पुष्टालम्बनादिना विकृतिं गृह्णाति तदापि गुरुपृच्छादिविधिनैव, यथोक्तं तत्रैव-"इच्छामि कारणेणं इमेण विगइं इमं तु भोउं जे। एवइयं वावि पुणो एवइकालं विदिण्णंमि॥ १॥ अत्र चूर्णिः-विणयपुव्वं गुरुं वंदिऊण भणइ-इमेण कारणेण इमं विगइं एवइयं पमाणेणं इत्तिअं कालं तुब्भेहिं अणुन्नाओ भोत्तुमिच्छामि, एवं पुच्छिए अणुन्नाए पच्छा भिक्खं पविट्ठो गहणं करोति, जे इति पादपूरणे। रसत्यागो हि बहुसमयं यावज्जीवमपि निर्वहति, उपवासादि तु कियत्समयमेव, एतच्च लोकेऽपि बहवः कुर्वन्ति, रसत्यागं तु ज्ञाततत्त्वा एवेति उपवासादिभ्योऽप्यस्याधिकफलत्वमत एव मोक्षार्थिनो मुमुक्षवो बहवो विकृतित्यागादि विशिष्याद्रि-

यन्ते, यथा श्रीमद्योतनसूरिशिष्यश्रीमानदेवसूरिरशिवोपशान्त्यै लघुशान्तिस्तवकृत् श्रीसूरिमंत्रदानावसरे तस्यांसयोर्लक्ष्मीभारत्यौ दृष्ट्वा माऽस्य चारित्रभ्रंशो भूदिति श्यामास्येषु गुरुषु यावज्जीवं विकृत्याद्यभिग्रहं जग्राह,यदुक्तम्-"भक्तं भक्तस्य लोकस्य, विकृतीश्चाखिला अपि। आजन्म नैव भोक्ष्येऽहमयं नियममग्रहीत् ॥ १ ॥" तथा आघाटनगरे भूपसभे द्वात्रिंशद्दिक्पटवादिविजयाप्तहीरलेतिविरुदाः श्रीजगच्चन्द्रसूरयो यावज्जीवमाचाम्लाभिग्रहिणो द्वादशवर्षी तत्तपस्तपनात्तपेति ख्यातिं लेभिरे इति रसत्यागः ४ ॥

कायक्लेशो वीरासनाद्युग्रासनकरणेनाग्निकर्मशरीरत्वकेशोल्लुञ्चनादिना शास्त्राविरोधेन तनुबाधनरूपो विचित्रः, यदवाचि-"वीरासणउक्कुडुआसणाइ लोआइओ अ विन्नेओ। कायकिलेसो संसारवासनिव्वेअहेउत्ति ॥१॥"वीरासणाइसु गुणा कायनिरोहो दया य जीवे सु। परलोअमई अ तहा बहुमाणो चेव अन्नेसिं ॥ २ ॥ निस्संगया य पच्छापुरकम्मविवज्जणं च लोअगुणा। दुक्खसहत्तं नरगाइभावणाए अ निव्वेओ ॥३॥"लोकेऽप्युक्तं-"पश्चात्कर्मपुरःकर्मजीवहिंसापरिग्रहाः। दोषा ह्येते परित्यक्ताः, शिरोलोचं प्रकुर्वता ॥१॥" ननु परिषहेभ्यः कोऽस्य विशेषः ?, उच्यते, परीषहाः स्वपरक्लेशरूपाः,कायक्लेशस्तु स्वकृतक्लेशानुभवरूप इति विशेषः। कायक्लेशे च निरन्तरं कर्मक्षयादिगुणः, तत एव छद्मस्थजिनजिनकल्पिकादयः प्रायो निरन्तरमूर्ध्वस्था एव तिष्ठन्ति, यदाप्युपविशन्ति तदाप्युत्कटिकादिविषमासने इति कायक्लेशः ५ ॥

संलीनता-विविक्तशयनासनतेत्यर्थः, सा चैकान्तेऽनाबाधे असंसक्ते स्त्रीपशुपण्डकविवर्जिते शून्यागारदेवकुलसभापर्वतगुहादीनामन्यतमस्मिन् स्थानेऽवस्थानमेषणीयफलकादिग्रहणं च, यदवाचि-"आरामुज्जाणाइसु थीपसुपंडगविवज्जिए ठाणं। फलयाईण य गहणं तह भणिअं एसणिज्जाणं॥१॥" इयं च द्रव्यतः, भावतस्तु मनोवाक्कायरूपयोग१कषाये २ न्द्रिय ३ संवृतता,

एवं च संलीनतायाश्चातुर्विध्यं, यदाहुर्महर्षयः-"इंदिय १ कसाय २ जोगे ३ पडुच्च संलीणया मुणेअव्वा । तहय विवित्ता चरिआ ४ पणत्ता वीअरागेहिं ॥ १ ॥" तत्र श्रोत्रादिभिरिन्द्रियैः शब्दादिषु सुंदरेतरेषु रागद्वेषाकरणमिन्द्रियसंलीनता, उक्तं च -"सद्देसु अ भद्दयपावएसु,सोअविसयमुवगएसुं । तुट्ठेण व रुट्ठेण व समणेण सया न होअव्वं॥१॥" एवं शेषेन्द्रियेष्वपि वक्तव्यं, यथा 'रूवेसु अ भद्दयपावएसु चक्खुविसयमुवगएसु' इत्याद्यभिलापेन । कषायसंलीनता कषायाणामनुदीर्णानामुदयनिरोधेन उदीर्णानां च निष्फलीकरणेन विज्ञेया, यदवोचन्-"उदयस्सेव निरोहो ऽउदयप्पत्ताण वाऽफलीकरणं । जं इत्थ कसायाणं कसायसलीणया एसा ॥१॥"योगसंलीनता पुनर्मनोवाक्कायलक्षणयोगानामकुशलानां निरोधः कुशलानामुदीरणं च,यदभ्यधुः-"अपसत्थाण निरोहो जोगाणमुदीरणं च कुसलाणं । कज्जंमि अ विहिगमणं जोगे संलीणया भणिआ ॥१॥" विविक्तचर्या तु विविक्तशयनाशनतैवानन्तरव्याख्याता। चतुर्विधाऽप्यसौ गजसुकुमालादिमहर्षिवत्पौषधिकसुदर्शनश्रेष्ठ्यादिश्राद्धवच्च पालनीया इति संलीनता ६ ॥ एवं षड्विधं बाह्यं तपः, बाह्यत्वं चास्याहारादिबाह्यद्रव्यापेक्षत्वात्प्रायो बहिर्देहस्य तापकत्वाल्लौकिकैरपि तपस्तया ज्ञायमानत्वात्कुतीर्थिकैरपि स्वाभिप्रायेणासेव्यमानत्वाच्च ॥

अथाभ्यन्तरं तपः–तत्र प्रायश्चित्तमतीचारविशुद्धिहेतुः यथाऽवस्थितं प्रायो–बाहुल्येन चित्तमस्मिन्निति कृत्वा,तच्चालोचनादि दशविधं, यदार्षम्-"आलोअण १ पडिकमणे २ मीस ३ विवेगे ४ तहा विउस्सग्गे ५ । तव ६ छेअ ७ मूल ८ अणवट्ठिए ९ अ पारंचिए १० चेव ॥ १ ॥" तत्रालोचना गुरोः पुरतः स्वापराधस्य प्रकटनं, क्वचित्तावन्मात्रेणैव शुद्धिः, यथाऽवश्यकृत्ये हस्तशतात्परतो गमनागमनादौ सम्यगुपयुक्तस्य निरतिचारस्य यतेः, सातिचारस्य तूपरितनप्रायश्चित्तसंभवात्, आह–यतेरवश्यकृत्ये गमनागमनादौ निरतिचारस्यालोचनं विनाऽपि कथं न शुद्धिः ? यथासूत्रं प्रवृत्तेः, सत्यं, परं याः चेष्टानिमित्ताः सू-

अभ्यन्तरं तपः ॥ ॥ ८६ ॥

ऽस्मा आस्रवक्रियारतासां शुद्ध्यर्थमालोचना १। प्रतिक्रमणमीर्यासमित्यादौ सहसाकारतोऽनाभोगतो वा कथमपि पथि कथा-
दिकथनगृहस्थभाषाभाषणादिके प्रमादे जातेऽपि हिंसादोषानापत्तौ १ इच्छाकारादिसामाचार्यकरणे २ अविधिना क्षुतकासितादौ
३ च मिथ्यादुष्कृतरूपं,अत्र हि गुरुसमक्षमालोचनां विना मिथ्यादुष्कृतमात्रेणैव शुद्धिः २। शब्दादिविषयाननुभूय कस्यचिदेवं
संशयः स्याद् यच्छब्दादिषु रागं द्वेषं वा गतोऽहं नवेति,ततस्तत्र शङ्काविषये पूर्वं गुरुसमक्षमालोचनं गुर्वादेशेन मिथ्यादुष्कृत-
प्रदानं चेत्येवंरूपं मिश्रप्रायश्चित्तम्,अमुकत्र शब्दादिषु रागं द्वेषं वा गतोऽहमिति निश्चये तु तपोऽर्हंप्रायश्चित्तं स्यात्३ अशुद्धे अश-
नादिके शुद्धबुद्ध्या गृहीते पश्चात् अशुद्धे ज्ञाते क्षेत्रकालातीते उद्गतानस्तमितबुद्ध्याऽनुद्गतेऽस्तमिते वा सूर्ये भक्तादौ गृहीते तस्य
विधिना विवेकः-त्याग एव प्रायश्चित्तं,तथैव शुद्धेः४। व्युत्सर्गः-कायोत्सर्गः, कुस्वप्नदुःस्वप्नदर्शनादौ स एव प्रायश्चित्तं,तावताऽपि
विशुद्धेः ५। जीवहिंसादौ यथार्हं तपः प्रायश्चित्तं ६। यस्तपोगर्वितस्तपोऽसमर्थो वा ग्लानबालवृद्धादिर्यस्तपःश्रद्धानरहितो
यश्च पुनः पुनर्दीयमानेनापि तपसा न दम्यते यश्च निष्कारणमपवादप्रसक्तो यो वा षाण्मासिकाद्युत्कृष्टतपोऽधिकप्रायश्चित्त-
योग्यमतीचारजातं कृतवान् तस्य तपोऽर्हंप्रायश्चित्तापत्तावपि महाव्रतारोपणकालादारभ्याहोरात्रपञ्चकदशकादिक्रमेण श्रा-
मण्यपर्यायच्छेदनं छेदो नाम प्रायश्चित्तं, यथा स्फुकादिदुष्टव्याधिदूषितमङ्गं शेषाङ्गरक्षार्थं छिद्यते, एवं शेषपर्यायरक्षार्थ-
मतीचारानुमानेन दूषितः पर्यायः छिद्यते इति भावः ७। संकल्पेन निष्कारणे पञ्चेन्द्रियवधे सतीवादमस्या नाशयामीत्यादि-
दर्पेण स्त्रीसेवायां मृषावादादत्ता(दा)नपरिग्रहेषु चोत्कृष्टेषु संकल्प्य पुनः पुनर्वा सेवितेषु पश्चानामप्येषामेव कारणानुमत्योर्मन्त्रौष-
धादिना स्त्रीगर्भाधानपातनादिरूपमूलकर्मणि तथा त्यक्तचारित्रादौ च पुनर्व्रतारोपणरूपं मूलं प्रायश्चित्तं ८। अतिसङ्क्लि-
ष्टाध्यवसायेन मरणनिरपेक्षं निर्दयं प्रहारदायिन उत्कृष्टं बहुशो वा स्तैन्यकारिणो निष्कारणं सावद्यपदे निमित्तप्रयोक्तुरेवमादे-

राचार्यस्योपाध्यायस्य वाऽनवस्थाप्यं प्रायश्चित्तं, तत्प्रतिपत्ता हि गणाद् बहिष्कृतोऽपि गणेन सह विहरति, साधुभिस्सहालापमण्डलीसंघाटकमिलनभक्तपानग्रहणादि किमपि न करोति, एकस्यामेव वसतौ साध्वनाक्रान्तप्रदेशे तिष्ठति, शैक्षादीनपि वंदते, ग्रीष्मे चतुर्थषष्ठाष्टमानि शिशिरे षष्ठाष्टदशमानि वर्षास्वष्टमदशमद्वादशानि जघन्यमध्यमोत्कृष्टानि पारणके च निर्लेपभक्तमित्येवंरूपं जघन्यतः षण्मासीमुत्कर्षतो द्वादशवर्षीं यावत्करोति ततो महाव्रतेषु स्थाप्यते इति भावः, इदञ्चाचार्योपाध्याययोरेव, अन्यस्य त्वेतद्दोषापत्तावपि मूलमेव ९ । जिनजिनप्रवचनाद्याशातनातः स्वलिङ्गिनीनृपपत्न्यादिसेविनो मुनिनृपवधकादेश्चाचार्यस्यैव पाराञ्चिकं, तच्च गणाद्बहिष्कृतस्यार्द्धयोजनमितक्षेत्रान्तरविहारिणो जिनकल्पिकप्रतिरूपतया महासत्त्वस्य गुरुक्रियमाणतप्तैरनवस्थाप्यवत्तपःकरणादिरूपं ज्ञेयं १० ॥ एतेषु पुलाकस्याद्यानि षट् प्रायश्चित्तानि. बकुशप्रतिसेवनाकुशीलयोः स्थविरकल्पे दशापि, जिनकल्पे यथालन्दकल्पे चाष्ट, निर्ग्रन्थस्यालोचनाविवेकरूपे द्वे, स्नातकस्यको विवेकः, सामायिकसंयमवतां स्थविरकल्पे छेदमूलरहितान्यष्ट, जिनकल्पे तु षट्, छेदोपस्थापनीयानां स्थविरकल्पे दशापि, जिनकल्पे त्वष्ट, परिहारविशुद्धिमतां स्थविरकल्पे अष्ट, जिनकल्पे तु षट्, सूक्ष्मसंपराये आलोचनाविवेकरूपे द्वे इति श्रीव्यवहारदशमोद्देशकवृत्तौ ॥ एषु चान्त्ये द्वे प्रायश्चित्ते चतुर्दशपूर्विभिः सह व्यवच्छिन्ने, शेषाणि त्वष्टौ दुष्पसहान्तं यावद् बोद्धव्यानि । बाह्यतपोभेदेभ्यश्च प्रायश्चित्तस्य विशिष्य कर्मक्षयहेतुत्वेनान्तरङ्गतस्तपस्त्वं प्रतिपत्तव्यं, गुरोः पुरो ह्यालोचितस्वातिचारस्य स्वल्पेनापि तपसा शुद्धिरागमे प्रतिपाद्यते, अनालोचितातिचारस्य तु न भूयसापि तपसा, श्रूयन्ते चात्र दृष्टान्ता लक्षणार्यादयः, इति प्रायश्चित्तं १ ॥

विनयश्चतुर्धा—ज्ञानदर्शनचारित्रोपचारभेदात्, तत्र सबहुमानं ज्ञानग्रहणाभ्यासस्मरणादिर्ज्ञानविनयः, सामायिकादिके

सकलेऽपि श्रुते भगवत्प्रकाशितपदार्थान्यथात्वासंभवात्तत्त्वार्थश्रद्धानिःशङ्कितत्वादिना दर्शनविनयः, चारित्रस्य श्रद्धानं सम्यगाराधनमन्येभ्यश्च तत्प्ररूपणादिश्चारित्रविनयः, प्रत्यक्षेष्वाचार्यादिष्वभ्युत्थानाभिगमनाञ्जलिकरणादिः परोक्षेऽपि कायवाग्मनोभिरञ्जलिक्रियागुणकीर्त्तनानुस्मरणादिश्चोपचारविनयः, एवं योगशास्त्रवृत्तौ विनयश्चतुर्धोक्तः, श्रीदशवैकालिकवृत्त्यादौ तु सप्तधा, मनोवाक्कायविनयरूपभेदत्रयप्रक्षेपात्, उक्तंच-" मणवयकाइअविणओ आयरियाईण सव्वकालंपि। अकुसलमणाइरोहो कुसलाणमुदीरणं तहय ॥ १ ॥ " दशवैकालिकनिर्युक्तौ तु पञ्चधैवं विनय उक्तः-" लोओवयारविणओ १ अत्थनिमित्तं च २ कामहेउं च ३ । भयविणय ४ मुक्खविणओ ५ विणओ खलु पंचहा होइ ॥ १ ॥ " तत्राद्यविनयचतुष्कस्वरूपं तत एवावसेयं, मोक्षविनयभेदानाह-" दंसण १ नाण २ चरित्ते ३ तवे अ ४ तह ओवयारिए चेव ५ । एसो उ मुक्खविणओ पंचविहो होइ नायव्वो ॥ २ ॥ अह ओवयारिओ पुण दुविहो विणओ समासओ होइ । पडिरूव जोगजुंजण तहय अणासायणाविणओ ॥ ३ ॥ पडिरूवो खलु विणओ काइअजोए अ वाइ माणसिओ । अट्ठचउव्विह दुविहो परूवणा तस्सिमा होइ॥४॥प्रतिरूपः उचितो विनयः परानुवृत्त्यात्मकस्त्रिधा काययोगे वाचि मानसश्च क्रमादष्टविधश्चतुर्विधो द्विविधश्च। अब्भुट्ठाणं १ अंजलि २ आसणदाणं ३ अभिग्गह ४ किई अ ५ । सुस्सूसण ६ मणुगच्छण ७ संसाहण ८ काय अट्ठविहो ॥ ५ ॥ अभिग्रहो-गुरुनियोगकरणाभिसंधिः, कृतिः-कृतिकर्म, अनुगमनम्-आगच्छतः प्रत्युद्गमनं, संसाधनं-गच्छतोऽनुव्रजनं । हिअ १ मिअ २ अफरुसवाई ३ अणुवीई भासि ४ वाइओ विणओ । अकुसलचित्तनिरोहो १ कुसलमणउदीरणा चेव ॥ ६ ॥ हितवाक् १ मितवाक् २ अपरुषवाक्३ अनुविचिन्त्यभाषी-स्वालोचितवक्ता ४ ।'एसो मे परिकहिओ विणओ पडिरूवलक्खणो तिविहो । बावन्नविहिविहाणं बिंति अणासायणाविणयं ॥ ७ ॥ तित्थयर १ सिद्ध २ कुल ३ गण ४ संघ ५ किरिअ ६-

धम्म ७ नाण ८ नाणीणं ९। आयरिय १० थेर ११ उवज्झाय १२ गणीणं १३ तेरस पयाणि ॥ ८ ॥ अणसायणा य १ भत्ती २ बहुमाणो ३ तहय वन्नसंजलणा ४। तित्थयराई तेरस चउग्गुणा हुंति बावन्ना ॥९॥" अत्र कुलं–नागेन्द्रचान्द्रादि गणः–कौटिकादिः स्थविरः–सीदतां स्थिरीकरणहेतुः गणाधिपतिः गणिरिति तद्वृत्तौ। प्रवचनसारोद्धारवृत्तौ तु गणी कियतोऽपि साधुसमुदायस्याधिपतिः, भक्तिः–उचितोपचाररूपा, बहुमानः–आन्तरः प्रतिबन्धविशेषः वर्णसञ्ज्वलना वर्णः–कीर्तिस्तस्य सञ्ज्वलना–प्रकाशनं। विनयश्च भवद्वयेऽपि सर्वार्थसिद्धिसाधक इत्यादि ज्ञानाचारद्वितीयभेदव्याख्यायामुक्तमिति विनयः २ ॥

वैयावृत्त्यं व्याधिपरीषहोपसर्गादौ यथाशक्ति तत्प्रतीकारोऽन्नपानवस्त्रपात्रप्रदानविश्रमाणादिभिस्तदानुकूल्यानुष्ठानं च, तच्च दशधा, पठन्ति च-"आयरिअ१ उवज्झाए २ थेर ३ तवस्सी ४ गिलाण ५ सेहे अ ६। साहम्मिअ ७ कुल ८ गण ९ संघ १० संगयं तमिह कायव्वं ॥१॥" स्थविरः तत्र श्रुतपर्यायवयोभेदात् त्रिविधः, श्रुतस्थविरः समवायाङ्गं यावदध्येता, पर्यायस्थविरो यस्य दीक्षितस्य विंशत्यादीनि वर्षाणि, वयःस्थविरः सप्तत्यादिवर्षजीवितः, दशमादिविकृष्टतपःकृत् तपस्वी, बहूनां गच्छानामेकजातीयानां समूहः कुलं चान्द्रादि, गच्छस्त्वेकाचार्यप्रणेयः साधुसमूहः। अत्र च गच्छः कुलमध्येऽन्तर्भावितत्वात् पृथग्नोक्तः, कुलसमुदायो गणः कोटिकादिः, साध्व्यादिचतुर्भेदः सङ्घः। वैयावृत्त्यं च विशिष्टतरफलं, यद्वदन्ति–"वेआवच्चं निअयं करेह उत्तमगुणे धरंताणं। सव्वं किर पडिवाई वेआवच्चं अपडिवाइ ॥ १॥ पडिभग्गस्स मयस्स व नासइ चरणं सुअं अगुणणाए। न हु वेआवच्चज्जिअं सुहोदयं नासए कम्मं ॥ २ ॥ अत्र प्राग्जन्मनि साधुपञ्चशत्या नित्यान्नपानप्रदानविश्रामणकरणाभिग्रहिणौ भरतबाहुबलिनौ ग्लानसकलवैयावृत्त्यकरणाभिग्रही वसुदेवजीवो नन्दिषेणमहर्षिश्च निदर्शनानि इति वैयावृत्त्यं ३ ॥

स्वाध्यायः पञ्चविधो वाचनाप्रच्छनापरावर्त्तनाऽनुप्रेक्षाधर्मकथाभेदात् ,तत्र सूत्रस्याध्ययनमध्यापनं च वाचना १ सूत्रस्यार्थस्य वा संदेहापनोदाय दृढीकरणाय वा परपार्श्वे पृच्छा प्रच्छना २ पूर्वाधीतस्य सूत्रादेरविस्मृत्याद्यर्थं घोषविशुद्धं गुणनं परावर्त्तना ३ सूत्रार्थयोर्मनसा नतु वाचाऽभ्यसनमनुप्रेक्षा ४ धर्मोपदेशस्य सूत्रार्थव्याख्यायाश्चाकर्णनं कथनं वा धर्मकथा ५ । पंचविधोऽप्येष महानिर्जराहेतुः,यदुक्तं श्रीमहानिशीथादौ-"बारसविहंमिवि तवे सब्भिंतरबाहिरे कुसलदिट्ठे । नवि अत्थि नवि अ होही सज्झाय-समं तवोकम्मं ॥ १ ॥ मणवयणकायगुत्तो नाणावरणं च खवइ अणुसमयं । सज्झाए वट्टंतो खणे खणे जाइ वेरग्गं ॥ २ ॥ इगदुतिमासक्खवणं संवच्छरमवि अ अणसिओ हुज्जा । सज्झायझाणरहिओ एगोवासफलंपि न लभिज्जा ॥ ३ ॥ उग्गमउ-प्पायणएसणाहिं सुद्धं च निच भुंजंतो । जइ तिविहेणाउत्तो अणुसमय भविज्ज सज्झाए ॥ ४ ॥ ता तं गोअम ! एगग्ग-माणसं नेव उवमिउं सक्का । संवच्छरखवणेणवि जेण तहिं निज्जराऽणंता ॥ ५ ॥ अत्र सिद्धान्तवाचनायां शिथिलसुविहिता-चाराणां श्रीजगच्चन्द्रसूरिवरादीनां सुविहितक्रियासमाचरणयावज्जीवाचाम्लादिदुस्तपतपस्तपनादिप्रतिबोधः १ चिलातीपुत्र-स्य मुनिपार्श्वतस्त्वपृच्छया ' उवसमविवेगसंवरे 'ति पदत्रयेण प्रतिबोधः, यद्वा सुविहितश्राद्धेन ' दोससयमूलजाल ' मिति-गाथार्थपृच्छया शिथिलाचारशताधिश्रीसोमप्रभसूरीणां सौविहित्यप्रतिबोधः२ अतिमुक्तकक्षुल्लकस्य दगमट्टी० इतिपदमात्रपराव-र्त्तनेन केवलज्ञानोत्पत्तिरथवा कान्तीपुर्यां धनश्रेष्ठी ज्ञाततत्त्वो विवदमानस्य पुत्रत्रयस्य भार्यया धार्यमाणोऽपि स्वं धनं भवनं च प्रददे, अन्यथा कलहानिवृत्तेः स्वयं च मृतमहेभ्यगृहे दुष्टव्यन्तराधिष्ठिते शून्ये 'अणुजाणह जस्सुग्गहो ' इत्युक्त्वा रात्रौ स्थितः, प्रतिक्रम्य स्वाध्यायमेवं परावर्त्तयति " रे जीव ! सुहदुहेसुं निमित्तमित्तं परो जिआणंति । सकयफलं भुंजंतो की-स मुहा कुप्पसि परस्स ? ॥ १ ॥ मोहविमूढा जीवा अत्थे [illegible] घरे अ मुच्छिआ धणिअं । जिणवयणमयाणंता भमंति संसार-

कंतारे ॥ २ ॥ धिद्धी अहो अणज्जो मोहो जमिमेण मोहिआ जीवा । न गणंति पुत्तभित्ते पहरता निक्किव निसंसा ॥ ३ ॥" इत्यादिस्वाध्यायं श्रुत्वा प्रशान्तः सुरः प्रत्यक्षीभूय श्यनेन कस्त्वमिति पृष्टः प्राह-एतद्गृहेशोऽहं मम प्राग्भवे द्वौ पुत्रौ, तयोरन्त्यभीष्टस्य गृहसारं दत्त्वा ज्येष्ठः किञ्चिद्दत्त्वा पृथक् स्थापितः, ततो रुष्टेन ज्येष्ठेनाहं हतो लघुश्च राजकुले निगडितः स्वयं गृहमात्तं, लघुस्तत्रैव मृतः, अहं व्यन्तरोभूतो विभङ्गेन ज्ञात्वा ज्येष्ठसुतं सकुटुम्बं जघान, अन्यमप्यत्रस्थं हन्मि, संप्रति त्वया बोधितोऽहं, त्वं मे गुरुरित्युक्त्वा दशलक्षस्वर्णनिधिं ददौ, ततः श्रेष्ठी श्राद्धधर्ममाराध्य क्रमेण प्रव्रज्य सिद्धः, इति परावर्त्तनायां श्येनज्ञातम् ३ ॥ कायोत्सर्गादावस्वाध्यायिकादौ च परावर्त्तनाया अयोगेऽनुप्रेक्षयैव श्रुतस्मृत्यादि स्यात्, परावर्त्तनातश्च स्मृतेरधिकफलत्वं, मुखेन परावर्त्तना हि मनसः शून्यत्वेऽप्यभ्यासवशात् स्यात्, स्मृतिस्तु मनसोऽवहितवृत्तावेव, मन्त्राराधनादावपि स्मृत्यैव विशेषसिद्धिः, यदभ्यधायि-" संकुलाद्विजने भव्यः, सशब्दान्मौनवान् शुभः । मौनजान्मानसः श्रेष्ठो, जापः श्लाघ्यः परः परः ॥ १ ॥" संलेखनाऽनशनादिना क्षीणदेहानामपि परावर्त्तनाद्यशक्तानामनुप्रेक्षयैव प्रतिक्रमणादिनित्यकृत्यानुष्ठानं, तत एव तेषां घातिकर्मक्षयात्केवलज्ञानोत्पत्तिस्ततः सिद्धिश्च, यथा मासद्वयाद्यनशनिनां पाण्डवादिमहर्षीणां शुक्लध्यानस्य द्वितीयभेदेऽपि क्षीणमोहगुणस्थानकान्त्यक्षणं यावद्भाविनि पूर्वगतश्रुतालम्बनत्वमागमे प्रोक्तं, तेनानुप्रेक्षा शुक्लध्यानस्य द्वितीयभेदं यावदपि सम्भवति, तदनन्तरं च केवलोत्पत्तिरिति । धर्मकथया कृष्णश्रेणिकादीनां सम्यक्त्वादिप्राप्तिर्मेघकुमारथावच्चापुत्रादीनां च प्रव्रज्याप्रतिपत्तिरपि, इति स्वाध्यायः ४ ॥

" ध्यानम्-अन्तर्मुहूर्त्तकालमात्रमेकाग्रचित्तता, आहच-" अंतोमुहुत्तमित्तं चित्तावत्थाणमेगवत्थुमि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु ॥ १ ॥" तच्च द्वेधा-शुभमशुभं च, अशुभमार्त्तरौद्रभेदाद् द्विविधं, तेन चात्र नाधिकारः, किन्तु शुभ- ध्यानम् ॥

ध्यानेन, तदपि द्वेधा-धर्म्मशुक्लभेदात्, चतुर्णामप्येषां प्रत्येकं चतुर्भेदानां किञ्चित्सविस्तरं स्वरूपं चारित्राचारभेदमनोगुप्तिव्याख्याने व्याख्यायि, शुभध्यानं च चिरसमयसंचितानामनन्तानामपि कर्मणां तत्क्षणं क्षयहेतुः, आह च महाभाष्यकृत्-"जह चिरसंचियमिंधणमणलो पवणसहिओ दुअं डहइ । तह कम्मिंधणममिअं खणेण झाणाणलो डहइ ॥ १ ॥ जह वा घणसंघाया खणेण पवणाहया विलिज्जंत्ति । झाणपवणावहूआ तह कम्मघणा विलिज्जंति ॥ २ ॥ किं च-जोगे जोगे जिणसासणंमि दुक्खक्खलया पउंजंते । इक्किक्कंमि अणंता वट्टंता केवली जाया ॥ ३ ॥" इत्युक्तेर्जिनमते यद्यपि यावन्तः सुकृतप्रकारास्तावन्तः सर्वेऽपि मुक्तिहेतवः, परं शुभध्यानानुगता एव, न त्वन्यथा, बहुसमयचारित्राराधकाङ्गारमर्द्दकाचार्यादिवत्, शुभध्याने च सति ये केऽप्यङ्गनाधनादयो भवप्रसक्तिहेतवस्तेऽपि मुक्तिहेतव एव स्युः, यदाह—"अहो ध्यानस्य माहात्म्यं, येनैकापि हि कामिनी । अनुरागविरागाभ्यां, भवाय च शिवाय च ॥ १ ॥" आर्षेऽपि-"जे जत्तिआ य हेऊ भवस्स ते चेव तत्तिआ मुक्खे । गणणाईआ लोगा दुण्हवि पुन्ना भवे तुल्ला ॥ १ ॥" यावन्तश्च सिद्धाः सिध्यन्ति सेत्स्यन्ति च ते सर्वेऽपि नानाविधदुस्तपस्तपनेऽपि शुभध्यानादेव, शुभध्यानेन च तपो विनापि मरुदेवीभरतचक्र्यादयः सिद्धाः, एवं च शुभध्यानमेव मोक्षस्याव्यवधानेनावन्ध्यं साधनं, शेषाणि त्वशेषाण्यपि सुकृत्यानि पारम्पर्येणैवेति सर्वसुकृतेभ्योऽपि सर्वप्रकारैरपि शुभध्यानस्यातिशायिता, यदाहुः-"निर्जराकरणे बाह्यात्, श्रेष्ठमाभ्यन्तरं तपः । तत्राप्येकातपत्रत्वं, ध्यानस्य मुनयो जगुः ॥ १ ॥ ध्यानशतकेऽपि-"संवरविणिज्जराओ मोक्खस्स पहो तवो पहो तासिं । झाणं च पहाणंगं तवस्स तो मुक्खहेऊ तं ॥ १ ॥" अत्र च मरुदेवाभरतचक्रवर्त्यादित्ययशःप्रभृतिनृपत्यष्टकराजर्षिपृथ्वीचन्द्रप्रसन्नचन्द्रेलापुत्रादयस्तत्तत्समयसंजातकेवलज्ञाना ज्ञातानि सर्वज्ञातानि, इति ध्यानं ९ ।

कायोत्सर्गः–प्रलम्बितभुजद्वन्द्वतया कायानपेक्षं स्थानं, स चोर्द्ध्वस्थानामासितानां शयितानां वा यथाशक्ति स्यात्, तत्र छद्मस्थतीर्थकृतां जिनकल्पिकादीनां चोर्ध्वस्थितानामेव, तैरुपवेशनादेरकरणात्, जातु जिनकल्पिक उपविशति तदाप्युत्कटिक एव तिष्ठति, स्वपित्यपि तदवस्थ एव, निशातृतीययामे, स्थविरकल्पिकानां तु यथाशक्ति कायोत्सर्गः, तत्र चैकोनविंशति-दोषास्त्याज्याः, तथा च कायोत्सर्गनिर्युक्तिः–"घोडग १ लया य २ खंभे ३ कुड्डे माले अ ४ सबरि ५ वहु ६ निअले ७। लंबुत्तर ८ थण ९ उद्धी १० संजइ ११ खलिणे अ १२ वायस १३ कविट्ठे १४ ॥ १ ॥ सीसुकंपिअ १५ मूई १६ अंगुलि भमुहा य १७ वारुणी १८ पेहा १ १९ ॥" तत्राकुञ्चितैकपादस्य घोटकस्येव स्थानं घोटकदोषः १ वातप्रकम्पितायां लताया इव कम्पनं लतादोषः २ स्तम्भकुड्यादावष्टभ्य स्थानं स्तम्भकुड्यदोषः ३ उपरि माले शिरोऽवष्टभ्य स्थानं मालदोषः ४ हस्तौ गुह्यदेशे स्थापयित्वा नग्नशवर्या इव स्थानं शवरीदोषः ५ शिरोऽवनम्य कुलवध्वा इव स्थानं वधूदोषः ६ निगडबद्धस्येव विहृतपादस्य मिलितपादस्य वा स्थानं निगडदोषः ७ नाभेरुपरि जानुनोरधो वा प्रलम्बमानवस्त्रस्य स्थानं लम्बोत्तरदोषः ८ दंशादिवारणार्थमज्ञानाद्वा हृदयमाच्छाद्य स्थानं स्तनदोषः, धात्रीवद् बालार्थं स्तनावुन्नमय्य स्थानं चेत्येके ९ पार्ष्णी मिलयित्वाऽग्रचरणौ विस्तार्य अङ्गुष्ठौ वा मिलयित्वा पार्ष्णी विस्तार्य स्थानं शटकोद्धिकदोषः १० व्रतिनीव पटेन शरीरमाच्छाद्य स्थानं संयतिदोषः ११ खलिनमिव रजोहरणं पुरस्कृत्य स्थानं खलीनदोषः, अन्ये खलीनार्त्तहयवदूर्ध्वाधःशिरःकम्पनं खलीनदोषमाहुः १२ वायसस्येवेतस्ततो नयनगोलकभ्रमणं दिक्प्रेक्षणं वा वायसदोषः १३ षट्पदिकाभयादिना कपित्थवत् परिधानवस्त्रं जङ्घादिमध्ये संपिण्ड्य स्थानं कपित्थदोषः, एवमेव मुष्टिं बद्ध्वा स्थानमित्यन्ये १४ भूताविष्टस्येव शीर्षं कम्पयतः स्थानं शीर्षोत्कम्पितदोषः १५ मूकस्येव हुं हुमित्यव्यक्तशब्दं कुर्वतः स्थानं मूकदोषः १६ आलापकादिगणनार्थमेवमेव चाऽङ्गुलीश्चा-

लयतस्तथा व्यापारान्तरनिरूपणार्थं सञ्ज्ञाकरणायैवमेव वा भ्रूनृत्यं कुर्वतः स्थानमङ्गुलिभ्रूदोषः १७ निष्पद्यमानवारुण्या इव बुडबुडारावेण स्थानं वारुणीदोषः, वारुणीमत्तस्येव घूर्णमानस्य स्थानं वारुणीदोष इत्यन्ये १८ अनुप्रेक्षमाणस्य वानरवदोष्ठपुटे चालयतः स्थानमनुप्रेक्षादोषः १९। योगशास्त्रवृत्तौ तु स्तम्भकुड्यदोषयोरङ्गुलिभ्रूदोषयोश्च भेदविवक्षयैकविंशतिः कायोत्सर्गदोषा उक्ताः, एतेषु लम्बोत्तरस्तनसंयतीदोषत्रयं साध्वीनां तथा तत्रयं वधूदोषश्च श्राविकाणां न स्युः, एके त्वन्यानपि कायोत्सर्गदोषानाहुः, यथा-' निष्ठीवनं वपुःस्पर्शः, प्रपंचबहुला स्थितिः। सूत्रोदितविधेर्न्यूनं, वयोऽपेक्षाविवर्जनम् ।१। कालापेक्षाव्यतिक्रान्तिर्व्याक्षेपासक्तचित्तता । लोभाकुलितचित्तत्वं, पापकार्योद्यमः परः ॥ २ ॥ कृत्याकृत्यविमूढत्वं, पट्टकाद्युपरिस्थितिः" इति ॥ एवं दोषवर्जितः कायोत्सर्गः पूर्वोक्तध्यानादप्यधिकफलः, ध्याने हि प्रायो वाङ्मानसयोरेव नियन्त्रणा, कायोत्सर्गे तु कायस्यापि, यदागमः-काउस्सग्गे जह सुट्ठिअस्स भज्जंति अंगुवंगाइं । इअ भिंदंति मुणिवरा अट्ठविहं कम्मसंघायं ॥ १ ॥ " अत एव बाह्याभ्यन्तरभेदतपसामुपरि प्रोक्तस्य ध्यानस्याप्युपरि कायोत्सर्गः प्रोक्तः, तस्य च फलं भवद्वयेऽपि प्रतीतं, तत्रेह लोके तत्कालमभीष्टसिद्ध्यादि, श्रूयते हि वनवासे स्नानार्थं दिव्यसरसि प्रविष्टानां क्रमात् पञ्चानामपि पाण्डवानां रोषात्तदीशसुरेण जलान्तराकृष्य निजस्थाने बन्दीकृतानां शुद्धिप्रासादनार्थं कुन्तीद्रौपदीभ्यां सर्वां रात्रिं कायोत्सर्गे कृते प्रातरुपरि गच्छन्निजविमानस्खलनादिना तत्स्वरूपं ज्ञात्वा सौधर्मेन्द्रेण तन्मोचनादि । तथा सुदर्शनश्रेष्ठिनोऽभयाराज्ञ्या कलङ्कदाने तत्पत्न्या मनोरमया तयोपत्रासेन स्वभ्रातृश्रीयकव्यापत्तौ यक्षासाध्व्या पश्चात्तापाद्भोजनाकरणे श्रीसङ्घेन तथा जिनकल्पस्थसाध्वक्षितृणापनोदनतिलकप्रतिबिम्बादिना कलङ्कापत्तौ सुभद्रादिभिश्च कायोत्सर्गकरणे देवता-

सान्निध्येन तत्कार्यसिद्धिशासनप्रभावनादि, परलोके पुनस्तत्फलं दृढप्रहारिचिलातिपुत्रप्रभृतीनामुग्रपापानामपि तद्भवसिद्ध्यादि, इति कायोत्सर्गः ६ । एवं षड्विधमाभ्यन्तरम्, आभ्यन्तरत्वं चास्याभ्यन्तरस्य कर्मणस्तापकत्वादभ्यन्तरैर्वाऽन्तर्मुखैर्भगवद्भिर्ज्ञायमानत्वाच्च, इत्थं द्वादशविधे तपआचारे सम्यग् यतनीयं । इति तपा० श्री० तपआचारप्रकाशकश्चतुर्थः प्रकाशः । (ग्रन्थाग्रं ४११-१३)

अथ वीर्याचारः प्रस्तूयते, तत्र वीर्यं- सामर्थ्यं तस्याचरणं-सर्वशक्त्या सर्वधर्मकृत्येष्वनिह्नवनेन प्रवर्त्तनं वीर्याचारः, तदुक्तं श्रीदशवैकालिकनिर्युक्त्यादौ" अणिगूहिअबलविरिओ परक्कमइ जो जहुत्तमाउत्तो । जुंजइ अ जहाथामं नायव्वो वीरियायारो ॥ १ ॥ " 'अणिगूहिअ'त्ति अनिह्नुतबाह्याभ्यन्तरसामर्थ्यः सन् पराक्रमते-चेष्टते यो यथोक्तषट्त्रिंशद्विधमाचारमाश्रित्येति शेषः, आयुक्तः-अनन्यचित्तः,पराक्रमते ग्रहणकाले,तत ऊर्ध्वं युनक्ति-नियोजयति च यथोक्तमाचारमेव, यथास्थाम-यथासामर्थ्यं ज्ञातव्योऽसौ वीर्याचारः, आचाराचारवतोः कथंचिदव्यतिरेकादिति ॥ वीर्याचारश्च मनोवाक्कायविषयभेदात्त्रेधा, तस्य चातिचारा अपि मनोवाक्कायवीर्यापह्नवरूपास्त्रय एव प्रतिक्रम्यन्ते, यदुक्तं चतुर्विंशत्यधिकशतश्राद्धातिचारसङ्कलनगाथायाम्-" पण संलेहण ५ पनरस कम्मा १५ नाणाइ अट्ठ पत्तेअं २४ । बारस तव १२ विरिअतिगं ३ पण सम्म ५ वयाइं ६० अइआरा १२४ ॥ १ ॥" आगमे तु पूर्वोक्तज्ञानाद्याचारचतुष्के षट्त्रिंशद्भेदे स्वशक्त्या प्रवृत्तिरूपो वीर्याचारोऽपि षट्त्रिंशद्भेद उक्तः, तथैव चैतद्ग्रन्थस्यादौ दर्शितः, वीर्याचारश्च कस्यचिन्मनसि कस्यचिद्वचसि कस्यचित्काये कस्यचिद्वाङ्मनसयोः कस्यचिद्वाक्काययोः कस्यचित् कायमनसोः कस्यचिन्मनोवचःकायेषु च भवति, एते च वीर्याचारस्य सप्त भेदा धर्मकृत्यमाश्रित्य केषाञ्चित् करणे १ केषाञ्चित्कारणे २ केषाञ्चिदनुमोदने ३ केषाञ्चित्सान्निध्य-

प्रदाने ४, एवमेकैकयोगे चत्वारो भेदाः,एवं करणकारणादिद्विकयोगे षट् त्रिकयोगे चत्वारः चतुर्णां योगे त्वेकः,एते पञ्चदशापि भेदाः पूर्वोक्तसप्तभेदैर्गुणिताः पञ्चोत्तरं शतं स्युः,एते च केषाञ्चिद्दानमाश्रित्य केषाञ्चिच्छीलमाश्रित्य,एवं द्वादशविधं तपो जीवदयां सत्यवादमदत्तपरिहारं निस्सङ्गतां निरीहतां कषायजयमिन्द्रियजयं चित्तजयं समितिपञ्चकं गुप्तित्रिकं सामायकं पौषधं वन्दनं प्रतिक्रमणं प्रतिलेखनां पठनं गुणनं वाचनं प्रच्छनं सूत्रार्थचिन्तनं सूत्रार्थश्रवणं द्वादशविधामनित्यतादिभावनां प्रभावनां तीर्थयात्रां तीर्थसेवां चैत्यादिकृत्यं देवगुरुसाधर्मिकभक्तिं पुण्योपदेशाद्यप्याश्रित्य ज्ञेयाः, केषाञ्चिच्च दानशीलादिद्विकत्रिकचतुष्कादियोगानप्याश्रित्य स्युः, तथा च वीर्याचारस्य भेदाः सहस्रावद्भिरपि प्रख्यापयितुं दुश्शकाः, तत्त्वं त्विदं–यस्य यत्र दानादौ धर्मकृत्ये सामर्थ्यं तेन तत्र सर्वशक्त्या यतनीयमेव,एवं वीर्याचारः सत्यापितो भवति । अत्राह परः–ननु किमनेन छगलिकागलस्तनानुकारेण वीर्याचारेण सुप्रयुक्तेनापि प्रयोजनं, यतो भव्यजीवानां भवस्थितेर्नियतत्वेन यदा येन सिद्धौ गन्तव्यं भविष्यति तेन तदा वीर्याचारप्रयोगमन्तरेणापि तत्र गन्तव्यमेवेति, अत्र प्रतिविधीयते–यदिदं भवता भवस्थितेर्नियतत्वं हेतुतयापन्यस्तं तन्न शस्तम्, असिद्धताघ्रातत्वात्, यतो भव्यानां भवस्थितिरेकान्तेन न नियता नाप्यनियता, किन्तु नियतानियता, ननु कथमित्थमिति चेदुच्यते, यत्पुण्यपापादिसामग्र्यां भवस्थितिर्हीयते वर्द्धते च तेन तस्या अनियतत्वं, यो यदा वा मोक्षं गन्ता स्यात् स तदा यातीति युक्त्या तु नियतत्वमपि, यदि हि यो यदा मोक्षं गन्ताऽस्ति स तदैव मोक्षं यास्यत्येवेत्येकान्तेनाङ्गीक्रियते तदा गोशालकमतमाननं प्रसज्यते, गोशालो हि यस्य यद् यदा भावि तस्य तत् तदा भवत्येवेतिरूपं नियतिवादं मन्यते

तन्मानने च प्रकटमेव मिथ्यात्वं, यतो जिनशासने कालादयो जगद्विवर्त्तकारणतया प्रत्येकं नाङ्गीक्रियन्ते, किन्तु पञ्चापि समुदिता एव, यदुवाच परपरिकल्पितकुमतकौशिककुलमूकीकरणनिपुणवचनगणकिरणप्रसरः श्रीसिद्धसेनदिवाकरः–" कालो १ सहाव २ निअई ३ पुव्वकयं ४ पुरिस ५ कारणेगंता। मिच्छत्तं ते चेव उ समासओ हुंति सम्मत्तं ॥१॥ " अतो नियतानियतैव भवस्थितिरभ्युपगन्तव्या, न चैवं दुर्द्धरविरोधग्रन्थसिंधुरावरोधः, यतो यथैकस्मिन्नेव वस्तुनि उत्पादव्ययध्रौव्याणि त्रीण्यप्यविरोधेन वर्त्तन्ते तथैकस्या अपि भवस्थितेर्नियतत्वमनियतत्वं च कथञ्चिदस्त्येव, इदमत्र रहस्यम्–पुण्याद्युपक्रमकरणेन जीवो यदर्वागपि मोक्षमधिरोहति श्रीजिनाज्ञालोपादिमहापापेन चाधिकमपि संसारं भ्रमति तदपेक्षया भवस्थितिरनियता, न चैतदनागमिकं, श्रूयते हि श्रीमहानिशीथादौ सावद्याचार्यादीनामेकभवावशेषीकृतभवस्थितीनामप्युत्सूत्रभाषणादिनाऽधिकभवस्थितिकरणादि, यच्च प्रतिनियत एव समये कश्चिन्मोक्षगमनयोग्यं पुण्यं कर्त्तुं शक्नोति नान्यदा तदपेक्षया तु नियतेति, यत्तु केवलज्ञानी पृष्टः सन्नियतां भवस्थितिं भाषते तेन च न व्यभिचारसञ्चारः स्फोरणीयः, यतः केवलज्ञानी केवलज्ञानमाहात्म्यादयमेव पुण्याद्युपक्रमं करिष्यति अयं तु नेत्यादि जीवोपक्रमादिस्वरूपं ज्ञात्वैव भाषते, नान्यथेति। किंच–भवस्थितेरेकान्तनियतत्वे स्वीक्रियमाणे जीवानां तत्तद्दुष्करधर्मकृत्यकरणस्य प्राणातिपातादिपापव्यापारपरिहरणस्य च वैफल्यमेव प्रसज्येत,न चैतत् दृष्टमिष्टं वा, ततः सिद्धं भव्यानां भवस्थितेर्नियतानियतत्वं, तत्सिद्धौ च सिद्धमेव सर्वत्र धर्मानुष्ठानेषु स्वशक्त्यनिगूहनरूपस्य वीर्याचारस्य साफल्यम्, उक्तं चागमे–"तित्थयरो चउनाणी सुरमहिओ सिज्झियव्वयधुवम्मि। अणिगूहिअबलविरिओ सव्वत्थामेण उज्जमई ॥१॥ "

नियतानियतत्वं भवस्थितेः ॥ ९२ ॥

अत्र बलं-शारीरं वीर्यं तु मानसं, इअजइ तेविहु नित्थिण्णपायसंसारसायरावि जिणा। अब्भुज्जमंति तो सेसयाण को इत्थ वामोहो ? ॥२॥ "इति। वीर्याचारे च दृष्टान्ताः प्रायः स्पष्टा एव, तथापि दिग्मात्रं दर्श्यते, तत्र दानमाश्रित्य निदर्शनं यथा-पाटलीपुत्रपत्तने श्रेष्ठी सागरदत्तः श्रीआर्हतधर्मानुरक्तचित्तः स्वन्यायवित्तैर्बहूनि श्रीजिनचैत्यानि सम्यग्दृशां दत्तचित्तनेत्रामात्रचैत्यानि कारयति स्म, तत्पुत्रो धनदेवनामा, स च पितरि मृते पञ्चशत्या पोतानां रजतमहारजत-रत्नादितत्तद्वस्तुभृतानामुदन्वति निमज्जनेन शेषस्याप्यशेषधनस्य विकटधाटीचौरवैश्वानराद्युपद्रवाभिभवनादिना च व्यपगमेन कियद्दिनैर्दिनेश इव दिनावसाने सर्वथा निःश्रीकतां भेजे, यतः-"इन्दिरा मन्दिरेऽन्यस्य, कथं स्थैर्यं विधास्यति? । या स्वसद्मनि पद्मेऽपि,सन्ध्यावधि विजृम्भते ॥१॥ वार्द्धिमाधवयोः सौधे, प्रीतिप्रेमाङ्कधारिणोः॥ या न स्थिता किमन्येषां, स्थास्यति व्ययकारिणाम् ? ॥२॥ " ततो ह्रिया तत्र स्थातुमशक्तो धनदेवश्चम्पायां गत्वा किञ्चिद्वाणिज्यं विधत्ते, परं न क्वापि किञ्चित्फलं लभते, ततोऽत्युद्विग्नो द्रविणार्जनचिन्तानिमग्नो भार्यां पप्रच्छ-अस्ति किञ्चिद्वेश्मनि शम्बलं ?, सोचे-स्वल्पप्रायाः सक्तवः सन्ति, तेनाचिन्ति-इयता शम्बलेन पाटलीपुत्रे गत्वा एकं पितृकारितं चैत्यं पितृमित्रश्रेष्ठिजिनदत्तपार्श्वेऽङ्गाणके मुक्त्वा दीनारादि शुद्धं धनं चार्जयामि इति ध्यात्वा धनदेवः सक्तून् स्ववस्त्राञ्चले निबध्य पाटलीपुत्रं प्रति प्रतस्थे, प्रथम-दिने श्वः सक्तूनेतान् भुक्त्वा पुरे प्रवेक्ष्यामीति विमृश्योपोषित एव तस्थौ, द्वितीयेऽह्नि यावता पत्रपुटे सक्तूनार्द्रीकृत्य भोक्तु-मारभते तावता तद्भाग्यैराकृष्टः कश्चिद्विकृष्टतपस्वी मासक्षपणपारणदिने तत्रैव प्रदेशे प्राप्तः, ततो धनदेवो दध्यौ-अहो अपूर्वः कोऽप्ययं निष्पुण्यस्यापि मत्कनः पुण्यप्रयोगः यदस्मिन्नपि निकुञ्जे मूर्त्तिमत्परतेजःपुञ्जस्य अस्य मुनिकुञ्जरस्य

योगः,तदस्मै तपस्विने ददे तदेतत् शम्बलं आददे च निस्तुलं पात्रदानफलं,यतः–प्रदत्तस्य प्रभुक्तस्य, दृश्यते महदन्तरम् । दत्तं श्रेयांसि संसूते, विष्ठा भवति भक्षितम् ॥१॥ एष एवामृताहारो, यः सत्पात्रे नियोज्यते । रसो न हीयते यस्य, कल्पकोटिशतैरपि ॥२॥" इति विचिन्त्य कृत्यवेदी धनदेवस्तत्कालमेव प्रवर्द्धमानश्रद्धः साधून् निमन्त्र्य सक्तुभिः सर्वैः प्रतिलम्भयामास, ततः स सर्वथा निरनुशयः सातिशयं तद्दानमनुवेलमनुमोदयन् मध्याह्ने पाटलीपुत्रे श्रेष्ठिजिनदत्तगृहं प्राप, तस्यां च निशि श्रेष्ठिनः स्वप्नमध्ये गोत्रदेव्याऽऽदिष्टमस्ति–यत्त्वन्मित्रपुत्रश्शम्पाया। अद्यात्रागत्य चैत्यमङ्गणके मुक्त्वा त्वत्पार्श्वे धनं याचिष्यते, परं त्वया वाच्यं–यदि मुनिदानपुण्यं दत्से तदा ते धनकोटिमपि दास्ये इति, ततो धनदेवः श्रेष्ठिना सादरं भोजयित्वा पृष्टः प्राह स्म स्वाकूतं, ततः श्रेष्ठिना धनकोट्या मुनिदानपुण्यमार्गणे विस्मितश्चिन्तयाञ्चक्रे–नूनं चत्यादपीदं दानपुण्यं महद् येनायं याचते, ततस्तत्पुण्यं नार्पयिष्यामि, किं धनकोट्याऽपीति ध्यात्वा धनदेवोऽप्राप्तधन एव ततो निर्गत्य स्वपुरासन्नं प्राप्तः, श्रान्तस्तरुच्छाये सुप्तः,स्वप्ने वनदेवतया प्रोचे–इतो यल्लास्यति तद्बहुमूल्यं भावीति, जागरितेन तेनाचिन्ति-चिन्तास्वप्नोऽयं तथापि किञ्चिद्गृहीत्वा गृहे यामि मा पत्नी किमप्यदृष्ट्वा द्रुतमधृतिं कार्षीरिति विचिन्त्य पञ्च कर्करानुत्तरीयाञ्चले सङ्गृह्य गृहे प्राप्तः, पत्न्या स्नपितः श्रान्तः शय्यायां सुष्वाप, ततो दयितयाऽचिन्ति–अस्ति किञ्चिदानीतं येन किञ्चित्सविशेषं भोजनसामग्रीं कुर्वे इति, ततस्तया सिचयाञ्चलमवलोकयन्त्या व्यलोकि स्वालोकतः सहस्रकरालोकवञ्चकं रत्नपञ्चकं, हृष्टया जागरितः स्वदयितः पृष्टो रत्नमूल्यं, विस्मितोऽपश्यत् पञ्चापि रत्नानि सपादलक्षमूल्यानि, अचिन्तयच्च-नूनमेतन्निर्निदानमुनिदान समुद्भूतसुकृतकल्पद्रुमस्य कुसुमोद्गमरामणीयकं, फलं पुनस्तस्य स्वर्गापवर्गप्राप्तिराप्तैः

दाने धनदेवज्ञातं॥ ॥९३॥

मारूपि, तदनु एकं रत्नं विक्रीय विशेषभोजनादिगृहसामग्रीं च समग्रां सत्यप्रकारां कारयाञ्चकार, ततः क्रमेण स्फायमाना-मानसमृद्धिः गृहागतानां यतीनां स्वयमेव घृतादिविशुद्धाहारविहारणं नियमितवान्, अन्यदेन्द्रेण तत्प्रशंसायां देवः कश्चिदेवं परीक्षां चकार–पर्वोपवासपारणदिने धनदेवो देवपूजां विधाय यावता भोक्तुमुपविशति तावता पश्यति गृहागतं यतिं,ततः स्वयमुत्थाय यथाविधि प्रासुकैषणीयाहारं विहार्य साधून् वन्दित्वा यावता भोजनायोपविशति तावता पुनः कश्चिदपिराजगाम, ततो हृष्टस्तथैव ददौ स्म, एवं तावद्यावद्यतीनां शतमागतं,प्रवर्द्धमानया श्रद्धया च स्वयमेव सर्वेभ्यो विधिवद्विहारितं,ततो दिनावसानभवनेन तद्दिनेऽप्युपोषितस्तस्थौ, अथ निशि धन्यंमन्यतया धनदेवं पुनः पुनः तद्दानमनुमोदयन्तं साक्षाद्भूय सुपर्वा सुपर्वाधिपविधीयगानप्रशंसादि निवेद्य सर्वेष्टसाधकं सर्वोपद्रववारकं चिन्तामणिं नाम मणिं वितीर्य स्वस्थानं भेजे। ततो धनदेवः स्वनियमं निर्वाह्याच्युते देवभूयमनुभूय पूर्वविदेहे चक्रित्वं प्राप्य चारित्रेण सिद्धिं प्राप्स्यति ॥ इति दाने धनदेवनिदर्शनम् ॥

शीलपरिशीलनवीर्याचारे अभयाराज्ञीविहितविविधोपसर्गैरपि स्वल्पमप्यक्षुब्धमनस्कः श्रेष्ठी सुदर्शनो निदर्शनं, तपोवीर्याचारे ज्ञाते यथा श्रीवीरजीवः पञ्चविंशे भवे छत्राग्रापुर्यां नन्दननृपतिः पञ्चविंशतिवर्षलक्षायुश्चतुर्विंशतिवर्षलक्षेभ्योऽनु पोट्टिलाचार्यपार्श्वे तपस्यां स्वीकृत्य यावज्जीवं मासक्षपणाभिग्रहं जग्राह, वर्षलक्षेण मासक्षपणसङ्ख्या यथा-"इक्कारस लक्खाइं असीइसहस्सा य छसय पणयाला। मासक्खमणा नंदणभवम्मि वीरस्स पंचदिणा ॥१॥" वर्षलक्षस्य षट्षष्ट्यधिकशतत्रयगुणने जातास्तिस्रः कोट्यः षट्षष्टिर्लक्षा दिनाः , तेषां सपारणदिनतपोदिनैरेकत्रिंशता भागे यथोक्त

लभ्यते । ननु कथं वर्षे षट्षष्ट्यधिकं शतत्रयं दिनाः सङ्गच्छन्ते?, तत्र षष्ट्यधिकत्रिशत्या एव दिनानां व्यवहारात्, उच्यते, अधिकमासकदिनक्षेपात्, आगमे हि पञ्चवर्षात्मके युगेऽधिकमासद्वययुक्ते ऋतुमासास्त्रिंशद्दिनरूपा एकषष्टिर्लभ्यन्ते ' इगसट्ठी रिउमासा ' इति वचनात्, तत एकषष्टितमस्य मासस्य ३० दिना विभज्य पञ्चसु वर्षेसु क्षिप्यन्ते, ततः सङ्गतमेव वर्षे षट्षष्ट्यधिकशतत्रयदिनगुणनं, लौकिकरीत्याऽपि पञ्चभिर्वर्षैरधिकमासद्वयभवनेऽपि ' प्रतिवर्षमवमरात्रषट्कभावेनैकमासह्रासादेक एव मासो वर्द्धते, ततस्तत्सत्कत्रिंशद्दिनानां पञ्चसु वर्षेषु विभज्य क्षेपे वर्षे ३६६ षट्षष्ट्यधिकं शतत्रयं दिनाः सङ्गता एवेति वृद्धाः १॥ अत्र द्वितीयं ज्ञातं यथा—पुण्डरीकविजये चक्रध्वजपुरे त्रिभुवनानन्दचक्रवर्तिपुत्री पवित्रशीलादिगुणाऽनङ्गसुन्दरी, सा सुप्रतिष्ठपुराधिपपुनर्वसुविद्याधरेणापजह्रे, ततश्चक्रवर्त्याज्ञया विद्याधरैर्गत्वा युद्धे क्रियमाणे भग्नं तद्विमानं, पतिता सा महाटव्यां, विलपति च—हा ताय ! सयललोअं परिपालसि विक्कमेण जियसत्तू । कह अणुकंपं न कुणसि इत्थ अरण्णंमि पावाए ? ॥१॥ हा जणणि ! उदरदुक्खं तारिसयं विसहिऊण अइगरुअं भयविहलदुम्मणाए कह मज्झ तुमं न संभरसि ? ॥ २ ॥ इत्यादि, ततः सा क्षुत्तृट्पीडिता स्वं कर्म निन्दन्ती तत्क्षयायाष्टमदशमादितपः कुर्वाणा पारणकदिने एकशः प्रासुकफलादि भुङ्क्ते, एवं त्रीणि वर्षसहस्राणि दुस्तपस्तप्त्वा दृढवैराग्यादन्ते चतुर्विधाहारं प्रत्याख्याय ततः शतहस्तमध्यस्थित्यभिग्रहा षष्ठे दिने मेरोर्निवर्त्तमानेन खेचरेण दृष्टा सा उपलक्ष्याकारिता च स्वगृहगमनाय काऽत्र ते चिन्तेति तया निषिद्धः खेचरश्चक्रवर्त्तिनोऽग्रे तदुदन्तं वदति स्म, स तेन सह तत्रागतोऽजगरेण ग्रस्यमानां स्वसुतां दृष्ट्वा संविग्नो द्वाविंशतिपुत्रसहस्रयुतः प्रवव्राज, तया मन्त्रं जानत्याऽप्यजगरः कृपया नापचक्रे,ततो धर्म-

तपसि नन्दनः शीलेऽनंगसुंदरी ।९४।

ध्यानेन मृत्वा देवलोके देवीत्वं प्राप्य च्युता द्रोणमेघराज्ञः प्रियङ्करायां पत्न्यां विशल्यानाम्नी सुता जज्ञे, पुनर्वसुर्विद्याधरः प्रव्रज्य तपसा निदानं कृत्वा त्रिदशीभूय दशरथपुत्रो लक्ष्मणोऽजनि, विशल्या तु प्राग्भवाचीर्णतपोमाहात्म्यात्गर्भस्था स्वमातुर्मेहारोगातुराया महारोगहर्त्री बभूव, तत्स्नानाम्भसापि बहवो जना व्रणसंरोहणशल्यापहाराख्याधिक्षयाद्यवापुः, स्थाने २ अशिवोपशान्तिश्च जज्ञे, तत्करस्पर्शाल्लक्ष्मणस्य हृदयाद्रावणमुक्ताऽमोघविजया नाम्नी धरणेन्द्रार्पिता शक्तिस्तपस्तेजोऽसहमाना निःससार, ततो लक्ष्मणस्तां परिणिन्ये ॥ इति तपसि विशल्यादृष्टान्तः ॥

भावनायां स्कन्दकाचार्यपञ्चशतीशिष्यादयो दृष्टान्ताः स्पष्टाः । प्रतिक्रमणवीर्याचारे कथा यथा—श्रीअणहिल्लपत्तने भूपतिर्भीमदेवः सेवकीकृतसकलनरदेवः शास्ति राज्यं, तत्र चातुर्याद्यनणुगुणानां कुलदेवीव बकुलदेवीनाम पणाङ्गना निष्प्रतिरूपरूपपात्रं वसति स्म, तस्याः कुलयोषितोऽप्यतिशायिनीं मर्यादां निशम्य नृपतिस्तद्भूतपरीक्षायै सपादलक्षमूल्यां क्षुरिकां निजानुचरैस्तस्यै ग्रहणकेऽदापयत्, स्वयं चौत्सुक्यात् तस्यामेव निशि बहिरावासे मालवेशविजययात्रायै प्रस्थानमसाधयत्, ततो नृपतिर्वर्षद्वितयं मालवमण्डले विग्रहाय तस्थौ, कुलदेवी नृपदत्तग्रहणात्परिहृतनिःशेषपुरुषाभिष्वङ्गा निस्तुषशीललीलयेव परिशीलयन्ती तद्वर्षद्वयं गमयति स्म, ततस्तृतीये वर्षे पत्तनं प्राप्तः पृथ्वीपतिर्जनपरम्परया विस्मयाद्वैतसत्रं पवित्रं तस्याश्चरित्रं निशम्य सम्यक् तद्गुणरंजितस्वान्तः स्वान्तःपुरे तां न्यधात्,सा सर्वां राज्यचिन्तां करोति, तत्र दण्डनायकः श्रीश्रीमालज्ञातिः सज्जनः श्रीजिनधर्ममर्मज्ञः श्रीगिरिनारगिरौ श्रीनेमिविहारोद्धारकारयिता, स च बहुव्यापारव्यग्रोऽपि न कदाचिद्देवपूजां विना भुङ्क्ते,न च द्विःप्रतिक्रमणकरणनियमभङ्गं विधत्ते, अन्यदा म्लेच्छसैन्यागमे देवी बकुलदेवी सज्जन-

दण्डेशेन सह सैन्यमादायाष्टादशकं गजानां चतुर्विंशतिः सहस्राण्यश्वानां द्वात्रिंशतं सहस्राणि पत्तीनामादाय म्लेच्छसम्मुखं प्रतस्थे, वनासनदीतीरे वैरिसैन्ये समासन्ने प्रातर्युद्धे निर्णीते निशि शस्त्रजागर्यायां देव्या वीराणां महोत्साहणां सन्नाहाः समर्पिताः १८ गजा गुडां ग्राहिताः तुरङ्गाः पक्षरिताः, इतश्च देव्या सज्जनः सेनानीपदेऽभिषिक्तो यामिन्या अन्त्ये यामे गजमधिरूढश्चतुर्दिक्षु सन्नद्धैर्वीरैर्वृतश्चिन्तयति स्म–रभसेन मा मे प्राभातिकप्रतिक्रमणवेला व्यतिगात्, यतः-"आयुषः क्षण एकोऽपि, रत्नकोट्या न लभ्यते। स कथं हार्यते हन्त, प्रमादरजसा नरैः? ॥१॥" ततो गजस्कन्धे स्थापनाचार्यं निवेश्य यथाविधि विदधे प्रतिक्रमणं, पार्श्वचरैश्चिन्तितं–किमयं वणिक् युद्धं विधास्यति?,ततो रणरसोत्सुका वीरा उभयोरपि पक्षयोर्मिलिताः महान् रणो जातः, सामायिके पारिते सज्जनदण्डेशेन स्वयमुत्थापनिकां विधाय स्वस्य घातदशकलगनेऽपि म्लेच्छसैन्यं त्रासितं,ततो राज्ञी स्वयमेत्य दुकूलाञ्चलेन सर्वाङ्गं प्रमृज्य तं गुप्तोदरे निनाय,पार्श्ववर्त्तिभिरूचे–देवि! दण्डनायकस्य काऽप्यपूर्वा वार्त्ता, यत्पाश्चात्ययामिन्यां 'एगिन्दिया' इत्याद्युक्तं, प्रातस्तु तथा युद्धं चक्रे यथा न केनापि, देव्या पृष्टं–दण्डेश! किमेतत्?, स प्राह–देवि! निशि स्वकार्यं कृतं प्रातस्तु राज्ञः, एवं तुरुष्कान् विजित्य देवी सोत्सवं श्रीपत्तने प्राप, सज्जनः सज्जाङ्गो जातः, श्रीभीमदेवेन महाप्रसाददानेन सच्चक्रे ॥ एवं सामायिकपौषधप्रतिलेखनास्वाध्यायजीवदयाद्याश्रित्य दृष्टान्ता यथायोगं बोद्धव्याः ॥ वीर्याचारविचारचारिमचणः संवेगरङ्गोल्बणः, प्राणिश्रोत्रसुधाभितर्पणनिपुणः पुण्यक्रियोत्सर्पणः । श्रीसूरीश्वररत्नशेखरगुरूत्तंसैः प्रकाशीकृते, शास्त्रेऽस्मिन्निति पञ्चमः समजनि श्रीमान् प्रकाशः स्फुटः ॥ १ ॥ इतितपागच्छनायकश्रीसोमसुन्दरसूरिश्रीमुनिसुन्दरसूरिपट्टप्रतिष्ठितश्रीरत्नशेखरसूरिविरचिते

श्रीआचारप्रदीपे पञ्चमः प्रकाशः ॥ (ग्रन्थाग्रं १७५–३) ॥ विख्याततपेत्याख्या जगति जगच्चन्द्रसूरयोऽभूवन् । श्रीदेवसुन्दरगुरूत्तमाश्च तदनु क्रमाद्विदिताः ॥१॥ पञ्च च तेषां शिष्यास्तेष्वाद्या ज्ञानसागरा गुरवः । विविधावचूर्णिलहरिप्रकटनतः सान्वयाह्वानाः ॥ २ ॥ श्रुतगतविविधालापकसमुद्धृतः समभवंश्च सूरीन्द्राः । कुलमण्डना द्वितीयाः श्रीगुणरत्नास्तृतीयाश्च ॥ ३ ॥ षड्दर्शनवृत्तिक्रियारत्नसमुच्चयविचारनिचयस्रजः । श्रीभुवनसुन्दरादिषु भेजुर्विद्यागुरुत्वं ये ॥४॥ श्रीसोमसुन्दरगुरुप्रवरास्तुर्या अहार्यमहिमानः । येभ्यः सन्ततिरुच्चैर्भवति द्वेधा सुधर्मभ्यः ॥ ५ ॥ यतिजीतकल्पविवृतश्च पञ्चमाः साधुरत्नसूरिवराः । यैर्मादृशोऽप्यकृष्यत करप्रयोगेण भवकूपात् ॥ ६ ॥ श्रीदेवसुन्दरगुरोः पट्टे श्रीसोमसुन्दरगणेन्द्राः । युगवरपदवीं प्राप्तास्तेषां शिष्याश्च पञ्चैते ॥ ७ ॥ मारीत्यवमनिराकृतिसहस्रनामस्मृतिप्रभृतिकृत्यैः । श्रीमुनिसुन्दरगुरवश्चिरन्तनाचार्यमहिमभृतः ॥८॥ श्रीजयचन्द्रगणेन्द्रा निस्तन्द्राः सङ्घगच्छकार्येषु । श्रीभुवनसुन्दरवरा दूरविहारैर्गणोपकृतः ॥९॥ विषममहाविद्यातद्विडम्बनाऽब्धौ तरीव वृत्तिर्यैः । विदधे यज्ज्ञाननिधिं मदादिशिष्या उपाजीवन् ॥ १० ॥ एकाङ्गा अप्येकादशाङ्गिनश्च जिनसुन्दराचार्याः । निर्ग्रन्था ग्रन्थकृतः श्रीमज्जिनकीर्तिगुरवश्च ॥ ११ ॥ एषां श्रीसुगुरूणां प्रसादतः षट्कृतिथिमिते १५१६ वर्षे । जग्रन्थ ग्रन्थमिमं सुगमं श्रीरत्नशेखरः सूरिः ॥ १२ ॥ अत्र गुणसत्रविज्ञावतंसजिनहंसगणिवरप्रमुखैः । शोधनलिखनादिविधौ व्यधायि सान्निध्यमुद्युक्तैः ॥१३॥ प्रत्यक्षरं निरीक्ष्यास्य, ग्रन्थमानं विनिश्चितम् (विपश्चिद्भिर्विनिश्चिता) पञ्चषष्ट्यधिकाऽनुष्टुप् सहस्राणां चतुष्टयी ॥१४॥ तद् शोधयन्तु सुधियो यन्मतिमान्द्यादवद्यमुदितमिह । ग्रन्थोऽयं चिरसमयं जयतात् जयदायकश्च विदाम् ॥ १५ ॥ इतिश्रीतपागच्छगगनाङ्गणनभोमणिश्रीसोमसुन्दरसूरिपट्टश्रीमुनिसुन्दरसूरिपट्टप्रतिष्ठितश्रीरत्नशेखरसूरिकृतः श्रीआचारप्रदीपनामा ग्रन्थः सम्पूर्णः ॥ (ग्रन्थाग्रं ४०६५)





इति-श्रीमुनिसुन्दरसूरिविनेयश्रीरत्नशेखरसूरिविरचितः

# श्रीआचारप्रदीपः समाप्तः।

इति श्रेष्ठि देवचंद लालभाई जैन पुस्तकोद्धारे ग्रन्थांकः ७१.